इति रूपकलक्षणस्यातिव्याप्तिर्वज्रलेपायिता स्यात्, विषयिणो निह्नवेऽपि विषयस्यानिह्नुतत्वात्। अथापि चित्रमीमांसायां प्राचीनमतानुसारेण रूपकलक्षणम्, कुवलयानन्दे च रत्नाकराद्यनुसारेणापह्नुतित्वोक्तिरिति यथाकथञ्चित् सामञ्जस्यं विधेयमिति दिक्।

अन्यत्रेति। अन्यत्र उपमेये आरोपार्थः उपमानताद्रूप्यारोपप्रयोजनकः, तस्य उपमानस्य, सः अपह्नवः पर्यस्तापह्नुतिरिति लक्षणार्थः। उत्तरार्धेनोदाहरणमाह—नायमिति। अयं गगनस्थः, सुधांशुः चन्द्रो, न, किंतु प्रेयसीमुखम् सुधांशुः इत्यर्थः। खण्डयितुमाह—अत्र चिन्त्यत इत्यादि। 'नायं सुधांशुः—' इत्यत्रापह्नुतिर्न भवितुमर्हति, तत्रापह्नुतिसामान्यलक्षणाप्रसक्तेरिति भावः। अप्रसज्यमानानि नानाविधानि लक्षणान्युद्धरति—तथाहि इत्यादिना। 'प्रकृत—' इति। इयं मम्मटभट्टस्य कारिका, प्रकृतम् उपमेयम्। अन्यत् उपमानम्। उपमेयमसत्यमिति। कारिकाकारकृतं कारिका-विवरणमेतत्। विषयापह्नव इति। विषयस्य उपमेयस्य, अपह्नवे सति वस्त्वन्तरस्य उपमानस्य, प्रतीतौ, जायमानायाम्, अपह्नुतिरलङ्कारो भवतीत्यर्थः। प्रकृतस्य निषेधेनेति। प्रकृतस्य उपमेयस्य निषेधेन तद्द्वारेत्यर्थः, साम्यात् सादृश्यमूलकम्, यत्, अन्यत्वस्य उपमानत्वस्य, प्रकल्पनम्, सा, अपह्नुतिः एकवाक्यगतत्वेन भिन्नवाक्यगतत्वेन च द्विप्रकारिकेत्यर्थः। उपरि समुद्धृतानि त्रीण्यपि अपह्नुतेः सामान्यलक्षणानि 'नायं सुधांशुः—' इत्यत्र न संघटन्ते, सर्वत्रोपमेयनिषेधस्य निवेशात्, प्रकृते चोपमानस्यैव निषेधेनोपमेयस्यानिषेधादिति सारांशः। उपसंहरति—तस्मादिति। दृढारोपमिति। आरोपदार्ढ्यसम्पादकमित्यर्थः। रूपकस्य सत्त्वेऽपह्नुतेश्चासत्त्वे हेतुमुपन्यस्यति—उपमेयतेति। मुखत्वसुधांशुत्वयोरेकाधिकरणवृत्तिताया निर्विघ्नं भासमानत्वादित्यर्थः। अत्रार्थे प्राचीनोक्तिं संवादयति—तदुक्तमिति। न विषमिति। विषं, विषं, न आहुः कथयन्ति, ब्रह्मस्वं ब्राह्मणस्वामिकं धनम्। विषम्, उच्यते कथ्यते इत्यर्थः। विषभोक्तुः कथञ्चिदनाशेऽपि ब्रह्मस्वभोक्तुर्नाशो ध्रुव इति तद्भावः। अत्रत्यं विमर्शिनीकारकृतमुपपादनमुद्धरति—अत्रेति। विषस्य उपमानतया विवक्षितस्य। ब्रह्मस्वविषये इति। ब्रह्मस्वरूपे उपमेये इत्यर्थः। आरोप्यमाणत्वादिति। विषस्येति पूर्वोक्तेनान्वयः। यया युक्त्या 'न विषम्—' इत्यत्रापह्नुतेरसत्त्वं रूपकस्य च सत्त्वम् विमर्शिनीकारोऽसाधयत्, तयैव युक्त्या 'नायं सुधांशुः—' इत्यत्रापि तथा सिद्ध्यतीति परमार्थः। अत्र 'इदं चिन्त्यम्—नेदं मुखं चन्द्र इति प्रसिद्धापह्नुत्युदाहरणेऽपि मुखनिषेधस्य चन्द्रारोपदार्ढ्यसम्पादकत्वस्य वक्तुं शक्यत्वेनानुभवसिद्धत्वेन चापह्नुतिमात्रस्योच्छेदापत्तेः। यदि तु निषेधपूर्वकारोपे चमत्कारविशेषस्यानुभवसिद्धत्वादलङ्कारान्तरत्वं तर्हि प्रकृतेऽपि तुल्यमिति।' इति नागेशः। वस्तुतस्तु 'नेदं मुखं, चन्द्रः' इति प्रसिद्धापह्नुत्युदाहरणे उपमेयतावच्छेदकस्य मुखत्वस्य निषेधः स्पष्टः, अतोऽत्र रूपककथनं दुराग्रहमात्रम्, 'विषये यद्यनिह्नुते' इति दीक्षितकृतरूपकलक्षणानुसारमपि विषयनिषेधस्य रूपकत्वविरोधित्वात्। विषयनिषेधस्य रूपकदार्ढ्यसम्पादकत्वमित्युक्तिरपि चक्षुषोर्धूलिप्रक्षेप एव। विषये निषिद्धे क्वोपमानतादात्म्यारोपः? तादात्म्यारोप एव चासिद्धे का पुनस्तस्य दार्ढ्यसम्पादनाशा? 'नायं सुधांशुः—' इत्यत्र तु 'प्रेयसीमुखं सुधांशुः' इति रूपकं वादिप्रतिवादिविधया स्फुटमेव सिद्ध्यति, 'नायं सुधांशुः' इति गगनस्थितस्य चन्द्रस्य कृते कृतो निषेधः प्रकृतारोपदार्ढ्याय एवेति स्वीकरणीयमकामेनापीति मार्मिका विमृशन्तु। ननु वस्तुस्थितेरेवानुरोद्धव्यतया प्राचीनैरनङ्गीकृतोऽप्येषोऽपह्नुतेर्भेदः स्वीक्रियत इत्याह—

यद्वि चेति। रत्नाकरेणेवेति। दृष्टान्तोल्लेखात्तदनुरोधेनायं भेदो गणित इति सूचितम्। प्रतिवन्द्या जागरूकत्वेन तदपि न सम्भवतीत्याह—तदेति। रूपके यथोपमानाहार्यताद्रूप्य-निश्चयो भवति तथापह्नुतावपीति रूपकप्रकारविशेषा एव सर्वा अपह्नुतय इत्यपि वक्तव्यं भवतेति भावः। ननु प्राचीनसिद्धान्तविरोध इति चेत्तत्राह—निरस्यतां चेति। प्राचीनाः प्रकाशकारादयस्तदनुरोधस्त्यज्यतामिति तात्पर्यार्थः। ननु निषेधपूर्वकारोपे चमत्कारविशेष-स्यानुभवसिद्धत्वेन कथमपलापः, अतो दोषान्तरमाह—एवमपीति। उक्तरीत्या तथा-ङ्गीकारेऽपीत्यर्थः। लक्षणस्येति। 'प्रकृतस्य निषेधेन—' इत्यादेः प्रागुद्धृतस्येत्यर्थः। अत्रेति। 'नायं सुधांशुः—' इति लक्ष्ये इत्यर्थः। अव्याप्तिरिति। प्रकृतनिषेधाभावादिति भावः। दोषान्तरमाह—अपि चेति। तस्यामेवेति। पर्यस्तापह्नुतावेवेत्यर्थः। 'बिम्बाविशिष्टे—' इति। रूपकप्रकरणे समुद्धृता व्याख्याता चेयं कारिका। वज्रलेपायितेति। दुर्वारेत्यर्थः। अतिव्याप्तेर्वज्रलेपायितत्वे हेतुमाह—विषयिण इति। 'नायं सुधांशुः—' इत्यत्र सुधांशो-रुपमानस्य निषेधेऽपि मुखस्योपमेयस्यानिषिद्धतया त्वदुक्तलक्षणप्रसक्तेरतिव्याप्तिरिति भावः। दीक्षितहृदयमुद्धाटयति—अथापीति। रत्नाकरादीति, आदिना दण्डिग्रहणम्। इत्थं हि काव्यादर्शे ( २।३०४ ) तेनोक्तम्—'अपह्नुतिरपह्नुत्य किंचिदन्यार्थसूचनम्' इति। यथा कथंचित् सामञ्जस्यमिति। अत्र "एतदनन्तरमत्र किंचित्पतितम्। तत्सर्वपुस्तके दुर्लभमेव अनन्तरं 'विधेयमिति दिक्' इति ग्रन्थः।" इति नागेशः।

अनुवाद करके दीक्षितमत का खण्डन किया जाता है—यत्तु इत्यादि। 'कुवलया-नन्द' नामक ग्रन्थ में अप्पय दीक्षित ने अपह्नुति के भेद कहने के प्रसङ्ग पर 'पर्यस्ता-पह्नुति' नामक भेद का निरूपण करते हुए कहा है कि "अन्यत्र—अर्थात् उपमेय में उप-मान का आरोप करने के लिए ( उपमान के ) अपह्नव को 'पर्यस्तापह्नुति' कहते हैं, जैसे यह आकाश में स्थित चन्द्रमा, चन्द्रमा नहीं है, तो फिर चन्द्रमा क्या है ? प्रियतमा का मुख" उक्त दीक्षित-कथन पर विचार किया जाता है—'नायं सुधांशुः—' को अपह्नुति का भेद कहना समुचित नहीं, क्योंकि इसमें अपह्नुति का सामान्य लक्षण संघटित नहीं होता। देखिए—'प्रकृतं प्रतिषिध्य—अर्थात् उपमेय को मिथ्या कहकर उपमान का सत्य-तया स्थापन करना अपह्नुति है।' यह लक्षण काव्यप्रकाशकार मम्मट ने किया है। 'विषयापह्नवे—अर्थात् उपमेय के छिपाने पर अन्य वस्तु की प्रतीति को अपह्नुति कहते हैं।' यह लक्षण सर्वस्वकार ने बनाया है। स्वयं दीक्षित जी ने 'चित्रमीमांसा' में 'उप-मेय का निषेध करके, सादृश्य के कारण, अन्य होने की कल्पना को अपह्नुति कहते हैं। वह कहीं एकवाक्यगत कहीं दोवाक्यगत होने से दो तरह की है।' यह लक्षण लिखा है। ये तीनों ही अपह्नुति के सामान्य लक्षण प्रकृत में संघटित नहीं होते। कारण, इन तीनों ही लक्षणों में उपमेय का निषेध आवश्यक माना गया है और यहाँ ( 'नायं सुधांशुः' में ) उपमेय का निषेध नहीं हुआ है। अतः 'नायं सुधांशुः—' इस वाक्य में दृढारोप रूपक ही होना उचित है, अपह्नुति नहीं। कारण, यहाँ उपमेयतावच्छेदक ( मुखत्व ) और उपमानतावच्छेदक ( चन्द्रत्व ) दोनों का एक अधिकरण ( आधार ) में रहना—जो रूपक का साधक है—निर्विघ्न रूप से भासित होता है—अर्थात् उपमान-उपमेय का विरोध—जो अपह्नुति का साधक होता है—यहाँ भासित नहीं होता। यही बात 'विमर्शिनी' में उपलब्ध भी होती है—"न विषम्—अर्थात् जहर को जहर नहीं कहते अपि तु ब्राह्मण के धन को जहर कहते हैं, यहाँ पहले विष का निषेध कर अनन्तर उसका 'ब्रह्मस्व'रूप उपमेय में आरोप किया जा रहा है, अतः यहाँ दृढारोप रूपक ही है, अपह्नुति नहीं।" यदि आप कहें कि—'अलङ्कार-रत्नाकर' की तरह मैंने भी प्राचीन मत की उपेक्षा करके इस भेद को अपह्नुति में ही गिना है, तो मैं कहूँगा कि आहार्य ताद्रूप्य का निश्चय तो

अपह्नुति में भी वैसा ही रहता है जैसा रूपक में, अतः अपह्नुति को भी रूपक का ही भेद कह दीजिए और प्राचीनों का मुँह जोहना छोड़ दीजिए। यदि आप निषेधपूर्वक आरोप में विलक्षण चमत्कार अनुभूत होने की बात कहकर उक्त प्रतिबन्दी से बचना चाहें तो बच सकते हैं, पर अन्य आपत्ति से नहीं बच सकते—अर्थात् 'प्रकृतस्य निषेधेन—' इस पूर्वोद्धृत चित्रमीमांसागत आपके लक्षण की अव्याप्ति यहाँ हो ही जायगी, तात्पर्य यह कि जब आप 'नायं सुधांशुः—' को अपह्नुति का भेद मानते हैं—तब उसमें आपका सामान्य अपह्नुति-लक्षण संघटित हो यह उचित है, पर ऐसा होता नहीं—यह दोष आपके मत में होगा ही। इतना ही नहीं, यदि आप 'नायं सुधांशुः—' में 'पर्यस्तापह्नुति' कहते हैं, तब उसी पर्यस्तापह्नुति में चित्रमीमांसागत आपका 'बिम्बाविशिष्टे—' यह रूपकलक्षण जो रूपक-प्रकरण में व्याख्यात हो चुका है—अतिप्रसक्त हो जायगा, क्योंकि वहाँ उपमान का निषेध होने पर भी उपमेय का निषेध नहीं हुआ है। इतने पर भी 'चित्रमीमांसा' में प्राचीनों के मत के अनुसार रूपक का लक्षण किया गया है और 'कुवलयानन्द' में रत्नाकर, दण्डी आदि के अनुसार इस भेद को अपह्नुति कहा गया है इस तरह किसी प्रकार सम-न्वय किया जा सकता है। यहाँ नागेश का कथन है कि—'सामञ्जस्यं' के बाद कुछ ग्रन्थ त्रुटित है, जो किसी भी पुस्तक में उपलब्ध नहीं होता।

भेदान्तरमुदाहरति—

'अनल्पजाम्बूनददानवर्षं तथैव हर्षं जनयञ्जनेषु।
दारिद्र्य घर्म-क्षपणक्षमोऽयं धाराधरो नैव धराधिनाथः॥'

कविः कमपि राजानं स्तौति—जनेषु लोकेषु, अनल्पं प्रभूतं, यज्जाम्बूनददानम् सुवर्ण-वितरणम्, स एव वर्षः वृष्टिः, तम्, तथैव, हर्षम् सुखम्, जनयन् सम्पादयन्, अयम् वर्णनीयः पुरुषविशेषः, दारिद्र्यरूपस्य घर्मस्य रौद्रस्य, क्षपणे नाशने, क्षमः समर्थः, धाराधरः मेघः, अस्ति, धराधिनाथः वसुधाधिपः ( राजा ) नैव, अस्तीत्यर्थः।

अपह्नुति का अन्य भेद उदाहरण द्वारा दिखलाया जाता है—अनल्प इत्यादि। कवि किसी राजा के विषय में कहता है—मानवों में अत्यधिक सुवर्णदान-रूप वृष्टि तथा हर्ष उत्पन्न करता हुआ यह दरिद्रता-रूप ताप के नाश करने में समर्थ मेघ है, राजा नहीं।

भेदं स्फुटयति—

**सावयवारोपेयमपह्नुतिः।**

'अनल्प—' इतिश्लोके दाने वर्षारोपेण 'धराधिनाथो न किन्तु धाराधरः' इत्यपह्नुतिः सावयवारोपा ( अवयवारोपसहिता, अवयवरूपकसहितेति यावत् ) व्यवह्रियत इति भावः।

भेद का स्पष्टीकरण किया जाता है—सावयवा इत्यादि। 'अनल्प—' इस पद्य में जो अपह्नुति है वह सावयवारोपा ( अवयवांश में आरोपसहिता ) कही जाती है। सारांश यह कि—यहाँ 'दानवर्षम्' इस अवयव-भाग में आरोप हुआ है—अर्थात् दान में वृष्टि-भाव आरोपित है ( फलतः रूपक है ), अतः 'राजा नहीं, किन्तु मेघ है' यहाँ की यह अपह्नुति 'सावयवारोपा' कही जाती है।

पुनर्भेदान्तरमाह—

**आरोपमात्रोपायत्वे परम्परिताप्येषा सम्भवति।**

आरोपेति आरोपस्येत्यादिः। मात्रपदेन अपह्नुतेरपह्नुत्युपायत्वं व्यवच्छिद्यते। यस्या अपह्नुतेरवयवांशे एक आरोपोऽपरस्यारोपस्योपायभूतो भवेत्, साऽपह्नुतिः परम्परिता कथ्यत इति भावः।

पुनः अन्य भेद किया जाता है—आरोप इत्यादि। जिस अपह्नुति के अवयवांश में

ऐसे दो आरोप हों जिनमें एक दूसरे का उपायभूत रहे तब वह अपह्नुति परम्परिता भी हो सकती है।

उदाहर्तुमाह—

यथा—

जैसे—

उदाहरणमुपन्यस्यति—

'मनुष्य इति मूढेन खलः केन निगद्यते।
अयं तु सज्जनाम्भोजवनमत्तमतङ्गजः॥'

केन, मूढेन, खलः दुष्टो जनः, 'मनुष्यः' इति पदेन, निगद्यते कथ्यते। मनुष्यो न, अपि तु अयम् सज्जनसमूहरूपस्य, अम्भोजवनस्य कमलपुञ्जस्य, कृते, मत्तः, मतङ्गजः हस्ती, अस्तीत्यर्थः। अत्र सज्जनसमुदयेऽम्भोजवनत्वारोपः खले मतङ्गजत्वारोपस्योपाय इति परम्परितताऽस्या अपह्नुतेर्बोध्या।

उदाहरण दिखलाया जाता है—मनुष्य इत्यादि। कौन मूर्ख 'दुष्ट' को मनुष्य कहता है। यह तो सज्जनरूप कमल-वन के लिये मत्त हाथी है—जैसे मत्त हाथी कमलवन को तोड़-फोड़कर विनष्ट कर देता है उसी तरह दुष्ट सज्जन को नष्ट कर देता है। यहाँ दुष्ट में हाथीपन के आरोप का उपायभूत है सज्जनों में कमल-वन-भाव का आरोप, अतः 'मनुष्य नहीं, हाथी है' इस अपह्नुति का व्यवहार 'परम्परित' शब्द से किया जाता है।

अपह्नुतिध्वनिमुदाहर्तुमाह—

अस्याश्च ध्वनिर्यथा—

अस्या अपह्नुतेः।

अपह्नुति की ध्वनि जैसे—

उदाहरणमुपन्यस्यति—

'दयिते रदनत्विषां मिषादयि! तेऽमी विलसन्ति केसराः।
अपि चालकवेषधारिणो मकरन्दस्पृहयालवोऽलयः॥'

व्याख्यातमिदं प्राक् ( ११४ पृष्ठे )।

उदाहरण का निर्देश किया जाता है—दयिते इत्यादि। (इसका अर्थ ११४ पृ. में देखें)।

उपपादयति—

अत्र 'नैता रदनत्विषः, किंतु किञ्जल्कपरम्पराः। न चैतेऽलकाः, अपि त्वलयः' इति पूर्वोत्तरार्धाभ्यां द्वे अपह्नुती तावत्प्राकट्येनैव निवेदिते। ताभ्यां च 'न त्वं नारी, किं तु कमलिनी' इति तृतीयापह्नुतिर्व्यञ्जनव्यापारेण प्राधान्येन निवेद्यते, तत्सम्बन्धिवस्तुनिषेधारोपयोस्तन्निषेधारोपनिवेदकत्वस्य न्याय्यत्वात्। तुल्ययोगिता तु गुणतया स्थिता।

तावत् आदौ। अप्राधान्ये ध्वनित्वाभावादाह—प्राधान्येनेति। तदिति। अवयवीत्यर्थः। ननु वाच्यतुल्ययोगिताया एवात्र प्राधान्येन कथं ध्वनित्वमत आह—तुल्ययोगिता त्विति। 'दयिते—' इतिश्लोके रदत्विट्त्वनिषेधसामानाधिकरण्येनारोप्यमाणकेसरतादात्म्यरूपा एका अपह्नुतिः पूर्वार्धेन, अलकत्वनिषेधसामानाधिकरण्येनारोप्यमाणभ्रमरतादात्म्यरूपा च द्वितीया अपह्नुतिः द्वितीयार्धेन, वाच्यवृत्त्यैव बोध्यते। तेन चापह्नुतिद्वयेन। नारीत्वनिषेधसामानाधिकरण्येनारोप्यमाणकमलिनीतादात्म्यरूपा 'न त्वं नारी, किंतु कमलिनी' इत्याकारा तृतीयाऽपह्नुतिर्ध्वन्यते। एतत्तृतीयापह्नुतिव्यञ्जकत्वं प्रथमवाच्यापह्नुतिद्वयस्य समु-

चितमेव, यतः अवयविसम्बन्धिवस्तुनिषेधारोपौ अवयविनिषेधारोपयोः बोधकौ भवत एव— अर्थात् अवयविभूतनारीसम्बन्धिरदनकान्तिनिषेधोऽवयविरूपनारीनिषेधस्य, एवम् अवयविभूतकमलिनीसम्बन्धिकिंजल्कपरम्परारोपः कमलिन्यारोपस्य बोधकौ भवेताम्। अस्याश्च व्यङ्ग्यापह्नुतेः सर्वाधिकचमत्कारितया प्राधान्येन तद्ध्वनित्वव्यवहारोऽत्र क्रियते। ननु अप्रकृतयोः केसरभ्रमरयोर्विलासरूपैकक्रियान्वयित्वेन जायमाना तुल्ययोगिताऽत्र प्रधानेति चेन्न, तस्या गुणताया एव स्वीकरणादौचित्याच्चेति भावः।

उपपादन किया जाता है—अत्र इत्यादि। 'दयिते—' इस पद्य में 'ये दन्त-कान्तियाँ नहीं हैं, किंतु केसर-पंक्तियाँ हैं' और 'ये केश नहीं हैं, किन्तु भ्रमर हैं' ये दो अपह्नुतियाँ तो क्रमशः पूर्वार्ध तथा उत्तरार्ध द्वारा प्रकट रूप में ही निवेदित हैं—अर्थात् वाच्य ही हैं। इन दोनों अपह्नुतियों द्वारा 'तू स्त्री नहीं, किन्तु कमलिनी है' 'यह तृतीय अपह्नुति, व्यञ्जनावृत्ति से, प्रधानतया ध्वनित होती है। कारण, 'अवयवी से सम्बन्ध रखनेवाली वस्तुओं के निषेध और आरोप से अवयवी के निषेध और आरोप विदित होते ही हैं'—यह बात न्याय-प्राप्त है। तात्पर्य यह कि नारी-सम्बन्धि दन्तकान्तियों का निषेध नारी-निषेध का और कमलिनी-संबन्धि केसरों का आरोप कमलिनी-आरोप का व्यञ्जक न्यायतः होगा। आप कहेंगे—यहाँ उपमान होने के कारण अप्रस्तुत केसर तथा भ्रमरों का विलास-क्रियारूप एक धर्म के साथ सम्बन्ध है, अतः जो तुल्ययोगिता वाच्य होती है वहीं प्रधान है, फिर अप्रधान व्यङ्ग्य अपह्नुति को लेकर ध्वनि का व्यवहार करना उचित नहीं, तो मैं कहूँगा कि—आपका कथन ठीक नहीं है। कारण, तुल्ययोगिता यहाँ है अवश्य, पर प्रधान नहीं किन्तु गौण, अतः उक्त ध्वनि का व्यवहार यहाँ अत्यन्त समुचित है।

खण्डनाय दीक्षितोक्तमुद्धरति—

यत्त्वप्पयदीक्षितैरपह्नुतिध्वनावुक्तम्—

"-'त्वदालेख्ये कौतूहलतरलतन्वी विरचिते
विधायैका चक्रं रचयति सुपर्णीसुतमपि।
अपि स्विद्यत्पाणिस्त्वरितमपमृज्यैतदपरा
करे पौष्पं चापं मकरमुपरिष्टाच्च लिखति॥'

इत्यादावपह्नुतिध्वनिरुदाहर्तव्यः। अत्र हि चक्रसुपर्णलेखनेन 'नायं साधारणः पुरुषः, किंतु पुण्डरीकाक्षः' इति कयाचिद् व्यञ्जितम्। अन्यया तु—तस्याप्येतादृशं रूपं न सम्भवतीत्याशयेन 'नायं पुण्डरीकाक्षोऽपि, किन्तु—मन्मथः' इति तदुभयमपमृज्य पुष्पसायकमकरध्वजलेखनेन व्यञ्जितम्।" इति।

कस्यचन नायकस्य वर्णनम् त्वदालेख्ये इति। कविः कथयति—कौतूहलेन उत्कण्ठया, तरलया चपलया, तन्व्या कृशाङ्ग्या नायिकया, विरचिते निर्मिते, त्वदालेख्ये त्वत्प्रतिकृतिभूते चित्रे, एका नायिका, चक्रं सुदर्शनाख्यम्, तच्चित्रमिति यावत्, विधाय कृत्वा, सुपर्णीसुतं गरुडम्, तच्चित्रमिति यावत्, अपि रचयति। स्विद्यन्तौ स्वेदयुक्तीभवन्तौ, पाणी करौ, यस्यास्तादृशी, अपरा तृतीया काचिन्नायिका, एतदपि चक्रगरुडचित्रमपि, त्वरितं शीघ्रम्, उपमृज्य प्रोञ्छ्य, करे चित्रलिखितत्वद्धस्ते, पौष्पं प्रसूनमयम्, चापं धनुः, उपरिष्टाच्च, मकरम्, लिखतीत्यर्थः। अत्र 'स्विद्यत्पाणिः' इति विशेषणं चित्रापमार्जनयोग्यतां व्यनक्ति। तस्यापीति। पुण्डरीकाक्षस्यापि। तदुभयमिति। चक्रसुपर्णद्वयमपीत्यर्थः। अयं भावः—दीक्षितेन 'त्वदालेख्ये—' इति पद्यमपह्नुतिध्वन्युदाहरणतया स्वीकरणीयमित्युक्त्वा तदुपपादने कथितम्, यत् अस्मिन् पद्ये चक्रसुपर्णचित्रनिर्माणेन (तादृशनिर्माणवर्णनेन) 'नायं साधारणः पुरुषः, अपि तु विष्णुः' इत्याकारिकाऽपह्नुति-

ध्वन्यते । पुनः विष्णोरीदृशं रूपं न भवितुमर्हतीत्यभिप्रायवदपरनायिकाकर्तृकतत्प्रोञ्छनपूर्वककराधिकरणकपुष्पधनुरादिनिर्माणवर्णनेन 'नायं विष्णुरपि, अपि तु कामदेवः' इत्याकारिकाऽपराऽप्यपह्नुतिर्ध्वन्यत इति । इति ।

खण्डन करने के लिये दीक्षितजी का मत उद्धृत किया जाता है—यत्तु इत्यादि । 'अप्पयदीक्षित ने अपह्नुति-ध्वनि के विषय में कहा है कि—"'त्वदालेख्ये—अर्थात् उत्कण्ठा से चञ्चल बनी कृशाङ्गी नायिका द्वारा रचित तेरे चित्र में दूसरी नायिका सुदर्शन-चक्र ( उसका चित्र ) बनाकर गरुड़ बना रही है । और तीसरी नायिका—जिसके हाथों में प्रस्वेद आ रहे थे ( इससे चित्र को मिटाने की योग्यता सूचित होती है ) झट से चक्र और गरुड़ को मिटाकर हाथ में पुष्पमय धनुष तथा ऊपर मगर लिख रही है ।' ( यह किसी नायक का कविकृत वर्णन है । ) इत्यादिक में अपह्नुति-ध्वनि का उदाहरण देना चाहिए, क्योंकि यहाँ किसी नायिका-द्वारा चक्र तथा गरुड़ के चित्रण का वर्णन होने से 'यह साधारण पुरुष नहीं, किंतु विष्णु है' यह अपह्नुति ध्वनित होती है और पुनः अन्य नायिका द्वारा 'विष्णु का भी ऐसा रूप नहीं हो सकता' इस अभिप्राय से शीघ्र चक्र तथा गरुड़ दोनों को मिटाकर पुष्पमय धनुष और मगररूप ध्वजा के चित्रण का वर्णन होने से 'यह विष्णु भी नहीं, किंतु कामदेव है' यह अपह्नुति भी ध्वनित होती है ।"

खण्डयति—

तदेतदापातरमणीयम् । यत्तावदुच्यते—'चक्रसुपर्णलेखनेन नायं साधारणः पुरुषः, किन्तु पुण्डरीकाक्षः' इति कयाचिद् व्यञ्जितमिति । तत्रापह्नुतेर्द्वौ भागौ—उपमेयनिषेधः, उपमानारोपश्चेति । तयोस्तावदुपमानारोपभागः पुण्डरीकाक्षोऽयमित्याकारश्चक्रसुपर्णलेखनेनाभिव्यङ्क्तुं शक्यः, चक्रसुपर्णयोस्तत्सम्बन्धित्वात् । न तु नायं साधारणः पुरुष इत्युपमेयनिषेधभागोऽपि, व्यञ्जकस्यारोपमात्रव्यञ्जनसमर्थस्य तादृशनिषेधव्यञ्जने सामर्थ्याभावात् । नाप्यनुभवसिद्धः सः, येन तद्व्यञ्जनोपायो गवेष्येत । नापि गवेष्यमाणोऽपि तद्व्यञ्जनोपायः शब्दोऽर्थो वा उपलभ्यते, येनानुभवकलहोऽपि स्यात् । न च साधारणपुरुषनिषेधमन्तरेण पुण्डरीकाक्षतादात्म्यारोपो दुर्घट इति सोऽपि व्यज्यत इति वाच्यम्, रूपकोच्छेदापत्तेः । मुखं चन्द्र इत्यादौ मुखनिषेधमन्तरेण चन्द्रत्वं दुरारोपमित्यस्यापि सुवचत्वात् । तत्रापि मुखनिषेधावगमे जितमपह्नुत्या ।

अथ मुखं चन्द्र इति रूपके मुखत्वसामानाधिकरण्येन चन्द्रताद्रूप्यस्यारोप्यमाणतया न मुखनिषेधापेक्षेति चेत्, प्रकृतेऽपि तर्हि तादृशसाधारणपुरुषत्वसामानाधिकरण्येन पुण्डरीकाक्षतादात्म्यारोपरूपमसौ राजा पुण्डरीकाक्ष इत्याकारकरूपकमेव भवितुमीष्टे, नापह्नुतिः ।

यदपि चोच्यते 'नायं पुण्डरीकाक्षः, अपि तु मन्मथः' इत्यादि । तत्र यद्यपि चक्रसुपर्णदूरीकरणेन नायं पुण्डरीकाक्ष इति निषेधः, पुष्पचाप-ध्वजगतमकरयोर्लेखनेन च मन्मथोऽयमित्युपमानारोपश्च व्यङ्ग्यो भवितुमर्हति, तथापि नासावपह्नुतिः । 'प्रकृतस्य निषेधेन यदन्यत्वप्रकल्पनम्' इति त्वत्कृतलक्षणस्याप्यत्रासत्त्वात् । अत्र हि निषेध्यस्य भगवतः पुण्डरीकाक्षस्यावर्ण्यत्वेनाप्रकृततया प्रकृतनिषेधाभावात् । नहि पूर्वारोपिततामात्रेण प्रकृतत्वं वक्तुं शक्यम् । प्रकृतपदस्यारोपविषयपरताया 'निषिध्य विषयम्' इत्यादिना क्त्वाप्रत्ययफलं ब्रुवता भवतैव तत्र स्फुटीकरणात् । काव्यप्रकाशकृतापि 'प्रकृतं यन्निषिध्या-

न्यत्साध्यते सा त्वपह्नुतिः' इति सूत्रं व्याचक्षाणेन 'उपमेयमसत्यं कृत्वा' इत्यादिना प्रकृतपदस्योपमेयपरतयैव व्याख्यानाच्च।

प्राचीनमतसिद्धेयमपह्नुतिर्व्यङ्ग्यत्वेनास्माभिरिहोच्यत इत्यपि कुशकाशावलम्बनमात्रम्, 'प्रकृतस्य निषेधेन' इत्यादिलक्षणं कुर्वता भवतैव तस्या बहिःकरणात्।

एवमप्युक्तपद्ये कोऽलङ्कारो व्यङ्ग्य इति चेत्? विच्छित्तिवैलक्षण्येऽतिरिक्तः, अन्यथा त्वपह्नुतिरेवास्तु। लक्षणं तु तदा प्रसक्तयत्किञ्चिद्वस्तुनिषेधसामानाधिकरण्येन क्रियमाणवस्त्वन्तरारोपत्वमेव। तस्मात् सर्वमेवेदमहृदयङ्गमं सहृदयानाम्।

तदेतदिति। पूर्वोद्धृतं दीक्षितमतमित्यर्थः। आपातरमणीयं बहिःसुन्दरम्। वस्तुतो दुष्टमिति यावत् प्रथममंशविशेषमनूद्य खण्डयति—यत्तावदिति। तत्रेति। उच्यत इति शेषः। तत्सम्बन्धित्वादिति। पुण्डरीकाक्षसम्बन्धित्वादित्यर्थः। भागोऽपीति। अभिव्यङ्क्तुं शक्य इत्यनुषङ्गः। व्यञ्जकस्येति। चक्रसुपर्णलेखनस्येत्यर्थः। नन्वेवं कथं तदनुभवोऽत आह—नापीति। स इति। तादृशनिषेधभाग इत्यर्थः। उक्तपद्य इति शेषः। गवेष्येत अन्विष्येत। ननु विनिगमनाविरहोऽत आह—नापीति। उपलभ्यत इति। प्रकृतपद्य इति शेषः। अनुभवकलह इति। 'निषेधभागो नानुभूयते' इति वदता मया सह 'अनुभूयत एव स भागः' इतिवदतस्तवानुभवविषयको विवाद इत्यर्थः। निषेधभागाभिव्यक्तेः स्वीकरणीयत्वे युक्तिं शङ्कते—न चेति। दुर्घट इति। तज्ज्ञानस्य तत्र प्रतिबन्धकत्वादिति भावः। सोऽपीति। निषेधभागोऽपीत्यर्थः। अनुपपत्त्येति भावः। समाधत्ते—रूपकोच्छेदेति। कथं तदुच्छेदः, 'मुखं चन्द्रः' इत्यादौ सावकाशत्वादित्यत्राह—मुखं चन्द्र इति। ननु तत्रापि तत्स्वीकारोऽत आह—तत्रापीति। रूपकेऽपीत्यर्थः। एवं च तदुच्छेदापत्तिरिति भावः। बाधज्ञानमाहार्यज्ञाने न प्रतिबन्धकमित्याशयेनाह—अथेति। सामानाधिकरण्येनेति। मुखत्वविशिष्टमुखरूपाधिकरणवृत्तितयेत्यर्थः। अत्र 'न त्ववच्छेदकावच्छेदेन' इति परिशिष्टार्थविवरणं तु न सुसङ्गतं प्रतिभाति, अप्रासङ्गिकत्वादिति सुधीभिराकलनीयम्। आरोप्यमाणतयेति। आहार्यज्ञानविषयीक्रियमाणतयेत्यर्थः। पूर्वोक्तं 'त्वदालेख्ये—' इति पद्यस्यापह्नुतिध्वन्युदाहरणताकथनं न युक्तम्, यतस्तत्र प्रथमापह्नुतेर्ध्वननं न सम्भवति, अपह्नुतिशरीरप्रविष्टयोरुपमेयनिषेधोपमानारोपात्मकयोर्द्वयोर्भागयोरन्तिमभागस्य 'पुण्डरीकाक्षोऽयम्' इत्याकारकस्य पुण्डरीकसम्बन्धिचक्रादिलेखनवर्णनरूपव्यञ्जकेन व्यङ्ग्यत्वेऽपि प्रथमभागस्य 'नायं साधारणः पुरुषः' इत्याकारकस्याव्यङ्ग्यत्वात्। ननु कुतोऽव्यङ्ग्यत्वं तद्भागस्येति चेत्? व्यञ्जकाभावादिति बोध्यम्। चक्रादिलेखनमेव तद्भागस्याप्यभिव्यञ्जकं किं न स्यादिति चेन्न, उदासीनतया तद्व्यञ्जने तस्यासमर्थत्वात्, उदासीनस्यापि व्यञ्जकत्वे यत्किञ्चिदनभिमतार्थव्यञ्जकत्वस्याप्यापत्तेः। उपमेयनिषेधावगममन्तरोपमानताद्रूप्यारोपः सम्भवत्येव नेति कथनं तु न किञ्चित्, तथाङ्गीकारे रूपकविलोपात्। तथा चात्रापि उपमेयतावच्छेदकपुरस्कारेणोपमानतादात्म्यावगमात् रूपकध्वनिरेव, नापह्नुतिध्वनिरिति सारार्थो बोध्यः। द्वितीयाप्यपह्नुतिर्ध्वन्यमानतया दीक्षिताभिमता न सम्भवतीत्याह—यदपीति। ननु निषेधसामानाधिकरण्येनोपमानतादात्म्यारोपसत्त्वात्कथं तदभावोऽत आह—अत्र हीति। ननु पूर्वमारोपितत्वात्प्रकृत एव सोऽत आह—नहीति।

निषिध्य विषयमित्यादिनेति । "-'निषिध्य विषयं साम्यादन्यारोप' इति तु क्त्वाप्रत्ययेन लक्षणं नोक्तम् । वक्ष्यमाणोदाहरणे आरोपपूर्वकापह्नवेऽव्याप्तिप्रसङ्गात्" इति तैरुक्तम् । फलं क्वचिदव्याप्तिरूपमनिष्टम् । तत्र चित्रमीमांसायाम् । 'त्वत्कृतलक्षणस्यापि' इत्यत्रापिपदेन सूचितं लक्षणान्तरस्यासत्त्वं स्फुटयति—काव्येति । व्याख्यानाचेति । पुण्डरीकाक्षस्तूपमानमिति भावः । 'नायं पुण्डरीकाक्षः, अपि तु मन्मथः' इत्याकारा द्वितीयापह्नुतिर्ध्वन्यते इति कथनमपि दीक्षितस्यायुक्तमेव, एतदाकारान्तर्गतांशद्वयस्य मूलोक्तरीत्या व्यङ्ग्यत्वसम्भवेऽपि अपह्नुतित्वस्यैव विरहात् । निषेध्यस्य विष्णोरवर्णनीयतया प्रकृतपदबोध्यताविरहेण 'प्रकृतस्य निषेधेन —' इति तदीयापह्नुतिलक्षणस्याप्यप्राप्तेः । ननु प्रकृतपदेन पूर्वारोपितार्थस्यैव ग्रहणं, तथा च प्रकृते पुण्डरीकाक्षः प्रकृत इति चेन्न, प्रकृतपदस्योपमेयपरतासाः भवता काव्यप्रकाशकृता च व्यवस्थापनादिति भावः । पुनरन्यथा दीक्षितोक्तेः सङ्गतिमाशंक्य समाधत्ते—प्राचीनेति । प्रागुक्तदण्डिमतेत्यर्थः । इह चित्रमीमांसायाम् । कुशकाशेति । यथा ससारकाष्ठाद्यवलम्बनमेवोचितम् न कुशाद्यसारतृणालम्बनम्, तथा सर्वसिद्धससारमतालम्बनमेवोचितं नैकदेशिमतालम्बनमिति भावः । तदेवाह—प्रकृतेति । एवः प्रत्यासत्तिबोधकः । दण्ड्यादिमतेन 'त्वदालेख्ये—' इत्यत्रापह्नुतिध्वनिः सुस्थ एवेति मयापि तन्मतानुसारं तथा लिखितमित्यपि न दीक्षितेन वक्तुं शक्यम्, 'प्रकृतस्य—' इत्यपह्नुतिलक्षणं रचयता तेन दण्ड्यादिमतस्य तिरस्कारात्, स्वयं तिरस्कृतस्य स्वयं पुरस्कारोऽनुचित एवेति भावः । उक्तखण्डनोत्तरं जायमानां जिज्ञासां शमयितुमाह—एवमपीति । अन्यलक्षणबहिर्भावे इत्यर्थः । उक्तपद्ये इति । त्वदालेख्ये इति पद्य इत्यर्थः । विच्छित्तिः चमत्कृतिः । अतिरिक्त इति । अपह्नुतेरन्यः रूपकाख्यः अलङ्कार इत्यर्थः । अन्यथेति । विच्छित्तिविशेषाभावे इत्यर्थः । ननु प्रागुक्तसर्वसम्मतापह्नुतिसामान्यलक्षणानाक्रान्तत्वात्कथं तत्त्वमत आह—लक्षणं त्विति । तदेति । तत्रापह्नुत्यङ्गीकरणे इत्यर्थः । प्रसक्तेति । प्राप्तेत्यर्थः । प्राप्तत्वं च यथाकथंचित्—न तु प्रकृतत्वापेक्षेति भावः । 'अस्तु' 'तदा' इत्येताभ्यामस्य स्वानभिमतत्वं सूचितम्, अतः स्वसिद्धान्तरीत्योपसंहारमाह-तस्मादिति । सर्वमेवेदमिति । दीक्षितस्य मूलभूतं प्रकृतं मतम्, यथाकथंचित् तत्समर्थनं चेत्यर्थः । अन्यत् सुगमम् । अत्र 'अहृदयङ्गमम्' इति प्रतीकमुपादाय नागेशः विचारान्तरमुपस्थापितवान् । तदधस्तान्निर्दिश्यते—"अत्रेदं चिन्त्यम्-दीक्षितैर्हि दण्डी त्वपह्नुतेः साधर्म्यमूलत्वनियममनादृत्य 'अपह्नुतिरपह्नुत्य किञ्चिदन्यार्थसूचनम्' इति लक्षयित्वा उदाजहार-'न पञ्चेषुः स्मरस्तस्य सहस्रं पत्रिणां यतः । चन्दनं चन्द्रिका गन्धो गन्धवाहश्च दक्षिणः ।' इत्याद्युपक्रम्य 'त्वदालेख्ये' इत्याद्युक्तमिति । तदनुसारेणैव तत्रापह्नुतिध्वनिरुदाहृत इति न किञ्चिदहृदयङ्गमम् । प्रकाशविरोधोऽपि न । तत्रोपमेयपदस्य पदार्थोपलक्षणत्वात् । अन्यथा 'केसेसु बला मोडिअ' इत्यत्र 'स्वयं न प्रपलाय्य गतास्तद्वैरिणोऽपि तु ततः पराभवं संभाव्य तान् कन्दरा न त्यजन्तीत्यपह्नुतिर्व्यज्यते'-" इति प्रकाशग्रन्थासंगतिः स्यादिति बोध्यम् । अत्र 'त्वदालेख्ये' इत्याद्युदाहरणं दण्डिमतानुसारमिति नागेशमहाभागः समाधत्ते । किन्तु चित्रमीमांसायां 'साधर्म्यमूलात्वपह्नुतिरिति तेन व्याहता' अत्रैव दण्डिमतानुवादः समाप्यते । 'त्वदालेख्ये' इत्युदाहरणं दत्त्वा 'इत्यादावपह्नुतिध्वनिरुदाहर्तव्यः' इति दीक्षितानां स्वमतमिदम् । अन्यथाऽलङ्कारान्तरेष्विवात्र ध्वनेरुदाहरणानुल्लेखात्प्रकरणपूर्तिरेव न सिद्धयेत् । किञ्च दण्डिकृतापह्नुतिलक्षणमस्वीकृतवता दीक्षितमहोदयेन तन्मतानुसारमप-

ह्नुतिध्वनिरुदाहृत इति न सम्भाव्यते। प्रकाशविरोधपरिहारोऽपि नागेशकृतो विचारणीय एव। यतः कारिकायां 'प्रकृत'-पदं विवरणे चोपमेयपदं स्पष्टमुल्लिखतः, उपमानोपमेयभावस्थल एव चापह्नुतिभेदानुदाहरतो मम्मटभट्टस्य दण्डिमतानुयायित्वं न कथमपि सिद्धयति। उपमेयपदस्य पदार्थोपलक्षणत्वकथनमपि मूलाक्षरस्वारस्यप्रतिकूलमेव, प्रायो नागेशातिरिक्तटीकाकारानभिमतञ्च। "–'केसेसु बला मोडिय' इत्यत्रापह्नुतिर्व्यज्यते—" इत्युक्तिस्तु 'ये दण्ड्यादय ईदृशे स्थलेऽपह्नुतिमङ्गीकुर्वन्ति तेषां मतेऽपह्नुतिरपि व्यङ्ग्यत्वेनाङ्गीकर्तुम् शक्या' इत्याशयेनापि सङ्गता भवितुमर्हतीति तु बहवः।

उक्त दीक्षितमत का खण्डन किया जाता है—तदेतत् इत्यादि। ऊपर उद्धृत किया गया अप्पयदीक्षितजी का कथन आपातमनोहर है—ऊपर से सुन्दर प्रतीत होने पर भी भीतर से परम कुरूप है (दोषयुक्त) है। देखिये, प्रथमतः यहाँ कहा जा रहा है कि—"नायिका द्वारा चक्र तथा गरुड़ के लेखन से 'यह साधारण पुरुष नहीं, किन्तु विष्णु है' यह अपह्नुति ध्वनित होती है।" इसके संम्बन्ध में मेरा कथन है कि—अपह्नुति के दो भाग हैं—उपमेय का निषेध और उपमान का आरोप। उनमें से दूसरा भाग अर्थात् उपमानारोपभाग—जिसका आकार है 'यह विष्णु है'—चक्र तथा गरुड़ के लेखन से ध्वनित हो सकता है, क्योंकि चक्र और गरुड़ विष्णु से सम्बन्ध रखते हैं। पर 'यह साधारण पुरुष नहीं है' यह उपमेयनिषेध-भाग भी यहाँ ध्वनित होता है—यह नहीं कहा जा सकता। कारण, चक्र-गरुड़लेखन-रूप व्यञ्जक केवल आरोप-भाग को ध्वनित करने में समर्थ है, उक्त उपमेय-निषेध-भाग को ध्वनित करने का सामर्थ्य उस व्यञ्जक में है ही नहीं। और यहाँ उपमेयनिषेधभाग अनुभवसिद्ध भी नहीं है—सहृदयों को यहाँ उस अंश की प्रतीति होती भी नहीं, यदि वैसी प्रतीति होती रहती तब उसको ध्वनित कर सकने वाला उपाय (व्यञ्जक) खोजा भी जाता। खोजने पर भी उस भाग का व्यञ्जक शब्द अथवा अर्थ यहाँ उपलब्ध नहीं होता, यदि वह उपलब्ध होता तब अनुभव के विषय में कलह भी हो सकता—अर्थात् व्यञ्जक के उपलब्ध होने पर 'उस अंश की भी प्रतीति यहाँ होती है' इस तरह का मतभेद भी खड़ा किया जा सकता था। साधारण पुरुष का निषेध किये बिना विष्णु के तादात्म्य का आरोप हो नहीं सकता, अतः वह अंश भी ध्वनित होता है यह भी नहीं कहा जा सकता, क्योंकि ऐसा मानने पर रूपक का उच्छेद हो जायगा—उसके लिये संसार में कहीं स्थान ही नहीं रह जायगा। कारण, ऐसी स्थिति में 'मुख चन्द्र है' इत्यादिक में मुख का निषेध किये बिना मुख में चन्द्रत्व का आरोप कठिन है—यह भी सहज में कहा जा सकेगा। यदि वहाँ भी मुख-निषेध की प्रतीति स्वीकृत कर ली जाय तब अपह्नुति का विजय हुआ और वस्तुतः रूपक उच्छिन्न हो गया। अब यदि आप कहें कि—'मुख चन्द्र है' इस रूपक में मुखत्व के अधिकरण में ही चन्द्र-ताद्रूप्य का आरोप होता है—अर्थात् मुख को समझते हुए चन्द्र समझा जाता है, अतः वहाँ मुख के निषेध की अपेक्षा नहीं है, तो मैं कहता हूँ कि, प्रकृत में भी पूर्वोक्त साधारणपुरुषत्व के अधिकरण में विष्णु-तादात्म्य का आरोप होता है, अर्थात् यहाँ भी साधारण पुरुष को पुरुष समझते हुए ही विष्णु समझते हैं, फलतः 'यह राजा विष्णु है' इस तरह का रूपक ही यहाँ हो सकता है, 'राजा नहीं, विष्णु है' इस तरह की अपह्नुति नहीं। यह तो हुई एक बात। दूसरी बात उन्होंने यह कही है कि—'यह विष्णु नहीं, किन्तु कामदेव है' इत्यादि। इस कथन में यद्यपि कुछ सत्यता है—अर्थात् इस अंश में यद्यपि चक्र तथा गरुड के चित्र को पोंछ डालने से 'यह विष्णु नहीं है' यह निषेधभाग और पुष्पमय धनुष तथा ध्वज-स्थित मगर के लेखन से 'यह कामदेव है' यह आरोपभाग—इस तरह दोनों भाग ध्वनित हो सकते हैं, तथापि यह अपह्नुति नहीं है, क्योंकि 'प्रकृतस्य—अर्थात् प्रस्तुत के निषेध द्वारा

अन्य की कल्पना अपह्नुति कहलाती है।' यह आपका अपना लक्षण भी यहाँ नहीं संघटित होता—दूसरों के लक्षण की तो बात ही क्या। कारण, यहाँ जिसका निषेध किया जा रहा है वे भगवान् विष्णु वर्णनीय नहीं हैं, किन्तु राजा वर्णनीय है, अतः विष्णु के अप्रस्तुत होने के कारण यहाँ प्रस्तुत का निषेध नहीं है। आप कहेंगे—जब पहले राजा में विष्णु का आरोप किया जा चुका है तब विष्णु प्रस्तुत क्यों नहीं? पर यह कथन भी ठीक नहीं, अर्थात्—केवल पहले आरोपित हो जाने से कोई पदार्थ—प्रकृत में विष्णु—प्रस्तुत नहीं कहा जा सकता। कारण, चित्रमीमांसा में आपने ही 'निषिध्य विषयम्…' इत्यादि ग्रन्थ से निषिध्य पद में आए 'क्त्वा' प्रत्यय का फल कहते हुए 'प्रकृत' पद का अर्थ 'आरोप का विषय—अर्थात् उपमेय' होता है—इस तरह स्पष्ट किया है। स्पष्ट अभिप्राय है कि चित्रमीमांसा में दीक्षितजी ने कहा—'विषय का निषेध करके (निषिध्य) साम्यमूलक अन्य का आरोप' इस तरह 'क्त्वा'प्रत्ययघटित लक्षण नहीं किया जा सकता, क्योंकि तब जहाँ पहले आरोप करके अपह्नव किया जाता है वहाँ अव्याप्ति हो जायगी। इस कथन से स्पष्ट हो जाता है कि वे (दीक्षितजी) प्रकृत पद का अर्थ उपमेय मानते हैं। और काव्यप्रकाशकार मम्मट ने भी 'प्रकृतं यन्निषिध्य—' इस कारिका की व्याख्या करते हुए 'उपमेय को असत्य बनाकर—' इत्यादि कथन द्वारा 'प्रकृत' पद का अर्थ 'उपमेय' माना है। आप कहेंगे—प्राचीनों—दण्डी आदि—के मत से तो यह अपह्नुति अवश्य है, क्योंकि उनके लक्षण में उपमेय की बात नहीं है—अर्थात् उन्होंने 'अपह्नुतिरपह्नुत्य किंचिदन्यार्थसूचनम्—किसी वस्तु का निषेध करके अन्य वस्तु का सूचित करना अपह्नुति है' ऐसा ही लक्षण किया है, बस, उन्हीं के मत को मानकर मैंने भी यहाँ अपह्नुतिध्वनि लिखी है। तो यह भी 'डूबते को तिनके का सहारा' जैसा ही है। कारण, 'प्रकृतस्य निषेधेन—' इत्यादि पूर्वोक्त लक्षण बनाते हुए आपने ही उस तरह की अपह्नुति का बहिष्कार कर दिया है। तात्पर्य यह कि जब आप दण्डी आदि के लक्षण को नहीं मानते तब उनके मतानुसार उदाहरण उपस्थित करना आपका कथमपि उचित नहीं कहा जा सकता। इतने पर भी यदि आप पूछें कि—उक्त पद्य में कौन अलंकार व्यङ्ग्य है? तो इसका उत्तर यह है कि—यदि इसमें अपह्नुति के चमत्कार से विलक्षण चमत्कार आपको अनुभूत हो तब अन्य अलंकार—अर्थात् रूपक मानिए, अन्यथा अपह्नुति ही मानिए। पर तब आपको दण्डी आदि की तरह 'प्रसक्त यत्किंचित् (उपमेय अथवा तद्भिन्न) पदार्थ के निषेध के साथ किया जाने वाला अन्य पदार्थ का आरोप अपह्नुति है' ऐसा ही लक्षण बनाना चाहिए। सारांश यह सिद्ध हुआ कि इन सब गड़बड़ियों के कारण ये सब कथन सहृदयों के लिए हृदयङ्गम नहीं हैं—इन बातों से सहृदयों को सन्तोष नहीं हो सकता। यहाँ नागेश कहते हैं कि—पण्डितराज का यह कथन विचारणीय है। कारण, दीक्षितजी ने "दण्डी ने तो 'अपह्नुति के सादृश्यमूलक होने' के नियम का अनादर करके 'अपह्नुतिरपह्नुत्य किञ्चिदन्यार्थसूचनम्' यह लक्षण बताकर उदाहरण दिया है 'न पञ्चेषुः स्मरस्तस्य सहस्रं पत्रिणां यतः। चन्दनं चन्द्रिका चन्द्रो गन्धवाहश्च दक्षिणः। (अर्थात् कामदेव पञ्चबाण नहीं हैं, क्योंकि उनके हजारों बाण हैं, चन्दन, चाँदनी, चन्द्रमा और मलयानिल आदि)'." इत्यादि आरम्भ करके 'त्वदालेख्ये—' यह पूर्वोक्त उदाहरण दिया है। अतः यह ध्वनि दण्डी आदि के अनुसार कथित होने के कारण अहृदयंगम नहीं है। प्रकाशविरोध भी नहीं होता, क्योंकि प्रकाश-ग्रन्थ में 'उपमेय'पद पदार्थमात्र का उपलक्षण है। अन्यथा—

'केसेसु बलामोडिय तेण असमरम्मि जअसिरी गहिया।
जह कन्दराहिं विहुरा तस्स दढं कंठ अम्मि संठविआ॥

अर्थात् उसने संग्राम में बलात्कार से जयलक्ष्मी को वैसे ग्रहण किया, जैसे कि गुफाओं ने उसके विधुर (स्त्रीरहित) वैरियों को अपने कण्ठ (अन्दर के हिस्से) में दृढ़तया स्थापित कर लिया)।' इस उदाहरण में 'वैरी अपने आप भाग कर नहीं गए, किन्तु गुफाएँ उससे

पराजय की संभावना करके उन्हें नहीं छोड़तीं—यह अपह्नुति अभिव्यक्त होती है' यह प्रकाशकार का ग्रन्थ असंगत हो जायगा, क्योंकि यहाँ उपमेय का निषेध नहीं है। बहुत लोग नागेश की आलोचना करते हुए कहते हैं कि नागेश का कथन ठीक नहीं है। कारण, पहले जो उन्होंने यह समाधान दिया कि—दण्डी के मतानुसार 'त्वदालेख्ये—' यह अपह्नुतिध्वनि का उदाहरण दिया गया है, वह संगत नहीं जँचता, क्योंकि चित्रमीमांसा में दण्डी के मत का अनुवाद पहले समाप्त हो जाता है तब 'त्वदालेख्ये—' यह उदाहरण दिया जाता है और उसके आगे 'इत्यादि स्थलों पर अपह्नुतिध्वनि का उदाहरण देना चाहिए' ऐसा लिखा जाता है, जिससे सिद्ध होता है कि यह दीक्षितजी का यह अपना मत है और यह बात जँचती भी है क्योंकि जब दण्डी के लक्षण को दीक्षितजी ने नहीं माना तब उनके मत से उदाहरण कैसे वे दे सकते हैं? और यदि यह उदाहरण दूसरे के मत से दिया गया होता तब अपने मत से दूसरा उदाहरण अवश्य देते, जैसे सभी अलंकारों में देते हैं। दूसरा समाधान जो उन्होंने दिया है प्रकाश-विरोध-परिहार वाला, वह भी सर्वथा मानने योग्य नहीं दीख पड़ता, क्योंकि जब मम्मटभट्ट ने मूल कारिका में 'प्रकृत' पद लिखा और उसकी व्याख्या में उसका अर्थ स्पष्टतः 'उपमेय' किया तथा सभी उदाहरण भी उपमानोपमेयभावस्थल में ही दिखलाए, तब उस 'उपमेय' पद को पदार्थमात्र का उपलक्षण कहकर मम्मट को दण्डिमतानुयायी बनाना उचित नहीं, रही बात 'केसेसु—' इस पद्य में अपह्नुतिध्वनि लिखने की। सो उसका आशय इस तरह वर्णित हो सकता है कि—उक्त पद्य में 'उत्प्रेक्षाध्वनि और काव्यलिङ्गध्वनि है' और जिन—दण्डी आदि—के मत से ऐसे स्थलों पर अपह्नुति हो सकती है उनके मत से अपह्नुतिध्वनि भी समझिए।

इति रसगङ्गाधरचन्द्रिकायामपह्नुत्यलङ्कारप्रकरणं समाप्तम्।

---

अपह्नुतिनिरूपणानन्तरमुत्प्रेक्षाप्रकरणं प्रारब्धव्यतया प्रतिजानीते—

अथोत्प्रेक्षाप्रकरणम्—

उत्प्रेक्षाप्रकरणमारब्धं वेदितव्यमिति भावः।

अपह्नुतिनिरूपण के बाद अब उत्प्रेक्षानिरूपण-प्रारम्भ करने की प्रतिज्ञा की जाती है—अथ इत्यादि। उत्प्रेक्षाप्रकरण अब आरब्ध समझना चाहिए।

तत्रादौ तल्लक्षणमाह—

**तद्भिन्नत्वेन तदभाववत्त्वेन वा प्रमितस्य पदार्थस्य रमणीयतद्वृत्ति-तत्समानाधिकरणान्यतरतद्धर्मसम्बन्धनिमित्तकं तत्त्वेन तद्वत्त्वेन वा सम्भावनमुत्प्रेक्षा।**

प्रमितस्येति। यथार्थज्ञानविषयीकृतस्येत्यर्थः। विनिगमनाविरहादन्योन्याभावात्यन्ताभावघटितलक्षणद्वयस्य युगपदुक्तिरियम्। तथा च 'तद्भिन्नत्वेन प्रमितस्य पदार्थस्य रमणीयतद्वृत्तितद्धर्मसम्बन्धनिमित्तकं तत्त्वेन सम्भावनमुत्प्रेक्षा' इत्येकम् 'तदभाववत्त्वेन प्रमितस्य पदार्थस्य रमणीयतत्समानाधिकरणतद्धर्मसम्बन्धनिमित्तकं तद्वत्त्वेन सम्भावनमुत्प्रेक्षा' इति च द्वितीयं लक्षणं फलितम्। अत्र लक्षणद्वये त्रयस्तच्छब्दाः प्रयुक्ताः, तत्र प्रथमेन तच्छब्देन विषयी, द्वितीयेन तेन विषयः, तृतीयेन च तेन पुनर्विषयी धर्तव्यः। सम्भावनं ज्ञानविशेषः। अयोग्यत्वाभावानुसन्धानमिति यावत्। अयमत्र स्पष्टोऽर्थः—चन्द्रादिभिन्नत्वेव ज्ञानस्य मुखादेः मुखवृत्तिचमत्कारकाह्लादकत्वाद्यात्मकचन्द्रधर्मसम्बन्धप्रयुक्तम् चन्द्रत्वेन सम्भावनमुत्प्रेक्षा। इदञ्च सम्भावनं तादात्म्य( अभेद )सम्बन्धेन अतो धर्म्युत्प्रेक्षा। एवं

'निधिं लावण्यानाम्—' इत्यादौ ( अग्रे उदाहृते पद्ये ) मोहाभाववत्त्वेन ज्ञातस्य ब्रह्मणः मोहसमानाधिकरणरमणीयाविचार्यकारित्वात्मकधर्मसम्बन्धप्रयुक्तम् मोहवत्त्वेन सम्भावनमुत्प्रेक्षा । इदञ्च सम्भावनं तादात्म्येतरेण-समवायसम्बन्धेन अतो धर्मोत्प्रेक्षा । इति ।

उत्प्रेक्षा-निरूपणप्रकरण में सर्वप्रथम उत्प्रेक्षा का लक्षण किया जाता है—तद्भिन्नत्वेन इत्यादि। जिस पदार्थ का भेद जिस पदार्थ में यथार्थतया ज्ञात हो उस पदार्थ की, उस पदार्थ के रूप में दोनों पदार्थों में रहनेवाले किसी सुन्दर धर्म को मूल मानकर, की जानेवाली सम्भावना, अथवा—जिस धर्म का अभाव जिस पदार्थ में यथार्थतया ज्ञात हो उस पदार्थ में उस धर्म से युक्त होने की ऐसी सम्भावना, जो उस धर्म के साथ रहनेवाले किसी सुन्दर धर्म को निमित्त मानकर की गई हो, 'उत्प्रेक्षा' कहलाती है। अभिप्राय यह है कि—अभाव दो प्रकार के होते हैं, एक अन्योन्याभाव, और दूसरा अत्यन्ताभाव। ( यद्यपि अभाव के दो अन्य प्रकार भी होते हैं, पर प्रकृत में उनका कोई उपयोग नहीं, अतः उनकी चर्चा नहीं की जाती ) अन्योन्याभाव उस अभाव को कहा जाता है जो तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताक हो—अर्थात् जिसके द्वारा 'घट पट नहीं' इत्यादि रीति से दो धर्मियों की परस्पर अभिन्नता वारित हो—जिसका व्यवहार 'भेद' शब्द से किया जाता हो, और अत्यन्ताभाव उस अभाव को कहा जाता है जो नित्य हो—अर्थात् जो जहाँ कदापि नहीं रहे वहाँ उसका अभाव—जैसे वायु में रूप का अभाव। अब प्रकृत में कहना यह है कि—इन दोनों अभावों में से किसी एक का निवेश उत्प्रेक्षालक्षण में अवश्य करना है, क्योंकि आखिर 'अन्य में अन्य की सम्भावना' को ही सभी आलङ्कारिक उत्प्रेक्षा मानते हैं, पर इन दोनों अभावों में से किसी एक का निवेश करने में कोई खास युक्ति नहीं है, अतः पण्डितराज ने दोनों अभावों का वैकल्पिक रूप में निवेश किया है। फलतः प्रथम लक्षण अन्योन्याभाव-घटित और दूसरा लक्षण अत्यन्ताभावघटित बनाया गया है। प्रथम लक्षण का लक्ष्य 'मुख में चन्द्र की सम्भावना' है, क्योंकि यह सम्भावना चन्द्र से भिन्नरूप में यथार्थतया ज्ञात मुख में चन्द्रवृत्ति-आह्लादकता का सम्बन्ध रहने के कारण की जाती है। यह सम्भावना 'तादात्म्य' सम्बन्ध से की जाती है, अतः 'धर्मी की उत्प्रेक्षा' कहलाती है। द्वितीय लक्षण का लक्ष्य 'ब्रह्मा में मोह की सम्भावना' है, क्योंकि यह सम्भावना उस ब्रह्म में उस मोह की की जाती है जिसमें जिसका अभाव सदा यथार्थतया ज्ञात है और इस सम्भावना में निमित्त होता है 'मोह' के साथ सदा रहने वाला 'अविचार्यकारित्व-विना विचारे कार्य करना' धर्म का ब्रह्म में सम्बन्ध। यह सम्भावना 'समवाय'सम्बन्ध से की जाती है, अतः 'धर्मोत्प्रेक्षा' कहलाती है।

लक्षणघटकपदकृत्यान्याह—

'लोकोत्तरप्रभाव ! त्वां मन्ये नारायणं परम्' इत्यत्र तादृशप्रभावस्य नारायणत्वव्याप्यतासम्भावनादशायां सामग्र्यभावेनानुमित्यनुदयाज्जायमानायां नारायणेनानेन प्रायशो भवितव्यमिति सम्भावनायामतिप्रसङ्गवारणाय तद्भिन्नत्वेन प्रमितस्येति सम्भावनायामाहार्यतां गमयति ।

एतेन—

'रामं स्निग्धतरश्यामं विलोक्य वनमण्डले ।
प्रायो धाराधरोऽयं स्यादिति नृत्यन्ति केकिनः ॥'

इत्यत्र सम्भावनायाम्, 'धाराधरधिया धीरं नृत्यन्ति स्म शिखावलाः' इत्यत्र भ्रान्तौ च नातिप्रसङ्गः ।

'वदनकमलेन बाले स्मितसुषमालेशमावहसि यदा ।
जगदिह तदैव जाने दशार्धबाणेन विजितमिति ॥'

अत्र जगज्जयसम्भावनायामतिप्रसङ्गवारणाय रमणीयतद्धर्मनिमित्तकमिति । स्मितस्य सम्भावनोत्थापकत्वेऽपि जगद्विजितरूपविषयविषयिसाधारणत्वाभावान्न दोषः ।

एतेन—

'प्रायः पतेद् द्यौः शकलीभवेद् ग्लौः सहाचलैरम्बुधिभिः स्खलेद् गौः ।
नूनं ज्वलिष्यन्ति दिशः समस्ता यद् द्रौपदी रोदिति हा हतेति ॥'

अत्रापि रोदनकारणीभूतकेशग्रहणादिजन्यपापनिमित्तोत्थापितायां स्वर्गपतनसम्भावनायां नातिप्रसङ्गः । प्रायः स्थाणुनाऽनेन भवितव्यम्, नूनं पुरुषेणानेन भाव्यम्, दूरस्थोऽयं देवदत्त इवाभाति, इत्यादौ निश्चलत्वचञ्चलत्वादिसाधारणधर्मनिमित्तायां सम्भावनायामतिप्रसङ्गः स्यात्, अतो रमणीयत्वं धर्मगतमुपात्तम् । रूपकवित्तावतिप्रसङ्गवारणाय सम्भावनमिति ।

कमपि राजानं प्रति कस्यचिदुक्तिः—लोकोत्तरेति । हे लोकोत्तरप्रभाव ! राजन् ! त्वां परम् उत्कृष्टम्, नारायणं, मन्ये, इति तदर्थः । सम्भावनादशायामिति । एतेन नारायणसम्भावनायां कारणमुक्तम् । नन्वेवं नारायणत्वस्य निश्चयात्मिकानुमितिरेव, न सम्भावनेति चेत्त्याह—सामग्र्यभावेनेति । निश्चयरूपव्याप्तिज्ञानादिरूपानुमितिसामग्र्यभावेनेत्यर्थः । अनुमित्यनुदयादिति । नारायणत्वानुमित्यनुत्पत्तेरित्यर्थः । ननु कथमेतासां सम्भावनानां तेन वारणमत आह—सम्भावनेति । इदं चेत्यादिः । सम्भावनायां लक्षणघटकीभूतायाम् । लक्षणे 'तद्भिन्नत्वेन प्रमितस्य' इत्युक्त्या 'तत्त्वेन सम्भावनस्य लक्षणोक्तस्य बाधकालिकेच्छाजन्यत्वरूपाहार्यत्वं प्रतीयते । तेन 'लोकोत्तरप्रभाव—' इत्यत्र 'लोकोत्तरप्रभावो नारायणत्वव्याप्यः प्रायः' इति सम्भावनाजन्यायाम् 'प्रायः नारायणेनानेन भवितव्यम्' इत्याकारिकायां सम्भावनायाम् नातिव्याप्तिः, इच्छाजन्यत्वविरहेणानाहार्यत्वात् । नारायणत्वस्य निश्चयात्मिकाऽनुमितिस्तु नात्र सम्भवदुक्तिका, लोकोत्तरप्रभावे नारायणत्वव्याप्यतानिश्चयदशायामेव तत्प्रसक्तेः । अत्र तु तत्र तस्याः सम्भावनैव, न निश्चय इति भावः । अत्र 'सम्भावनाया आहार्यत्वस्वीकारेण—असामान्ये राजनि अलौकिकप्रभाववशाद् या अनाहार्या ( सत्या ) नारायणत्वसम्भावना [ नारायणत्वं काममसत्यम् परं तत्त्वसम्भावना तु सत्यैव ] तस्यामुत्प्रेक्षात्वं न प्रसक्तम् ।' इति 'सरला' जलोपरि प्लवमाना नौकेव तलगतं रत्नं वस्तुतत्त्वं नैव स्पृशतीति सुधीभिराकलनीयम् । आहार्यत्वनिवेशस्य फलान्तरमाह—एतेनेति । कवेरुक्तिः—राममिति । केकिनो मयूराः, वनमण्डले, स्निग्धतरश्यामम् अतिचिक्कणं श्यामलवर्णम् च, रामम्, विलोक्य, अयं, प्रायः, धाराधरः मेघः, स्यात्, इति, सम्भावनया, नृत्यन्तीति तदर्थः । अत्रैव पद्ये उत्तरार्धं परिवर्त्य पठति—'धाराधरधिया—' इति । तादृशं राममालोक्य—धाराधरधिया मेघभ्रान्त्या, शिखावलाः मयूराः, नृत्यन्ति स्म नृत्यं कृतवन्तः इति परिवर्तितपाठेऽर्थः । प्रथमपाठे रामे जायमानायां मेघसम्भावनायाम्, परिवर्तितपाठे च रामे जायमानायाम् मेघभ्रान्तौ नातिव्याप्तिः, तयोः ( मेघसम्भावनामेघभ्रान्त्योः ) बाधाकालिकतया अनाहार्यत्वात् । ननु कथमनाहार्यत्वनिश्चय इति चेत्? नृत्यरूपकार्यस्योत्पत्तेर्दर्शनात् इति बोध्यम् । आहार्यज्ञानात्तु न कार्योत्पत्तिरिति भावः । 'तद्धर्मनिमित्तकम्' इत्यस्य व्यावर्त्यमाह—'वदन—' इति । हे

धाले ! त्वं, यदा, वदनकमलेन मुखपद्मद्वारा, स्मितसुषमालेशम् ईषद्धास्यशोभालवम्, आवहसि धत्से, तदैव तस्मिन्नेव क्षणे, अहं, जाने वेद्मि, यत् इह अस्मिन् स्थाने, दशार्धबाणेन पञ्चबाणेन ( कामेन ) जगत्, विजितम् इति तदर्थः। उपपादयति—अत्रेति। जगज्जयेति। जगत्कर्मकस्य जयस्य सम्भावनायामित्यर्थः। तद्धर्मेति। तद्धर्मसम्बन्धेत्यर्थः। ननु स्मितरूपधर्मनिमित्तकत्वमस्त्येवात आह—स्मितेति। जगदिति। जगद्विजितरूपौ यौ विषयविषयिणौ तन्निष्ठत्वाभावादित्यर्थः। 'वदनकमलेन—' इत्यत्र नायिकामुखगतस्मितस्य कामदेवकर्तृकजगज्जये सहकारितया तन्मूलकतादृशजगज्जयसम्भावनायां न प्रकृतोत्प्रेक्षालक्षणातिप्रसक्तिः, 'रमणीयतद्धर्मसम्बन्धनिमित्तकम्' इत्यनेन व्यावृत्तेः। स्मितं तु न जगदात्मकविषयधर्मः न वा तद्धर्मस्य विजितत्वात्मकविषयिणि सम्बन्ध इति भावः। तस्यैव विशेषणस्य व्यावर्त्यान्तरमाह—एतेनेति। प्रायः इति। यत् यस्मात्, द्रौपदी पाण्डवपत्नी, 'हा हता' इत्युक्त्वा, रोदिति, तस्मात्, प्रायः, द्यौः स्वर्गः, पतेत् भूतलमागच्छेत्, ग्लौः चन्द्रः, शकलीभवेत् खण्डशः स्यात्, अम्बुधिभिः समुद्रैः, अचलैः पर्वतैः, च सह, गौः पृथिवी स्खलेत् विचलेत्, समस्ताः सर्वाः, दिशश्च, नूनम् निश्चितम्, ज्वलिष्यन्ति ज्वालामयाः स्युरित्यर्थः। उपपादयति—अत्रापीति। रोदनेति। रोदनकारणीभूतं यत् केशग्रहणादि तज्जन्यं यत्पापम् तद्रूपेण निमित्तेन, उत्थापितायामिति विवक्षितोऽर्थः। नातिप्रसङ्ग इति। पापस्य 'द्यौः पतेत्' इत्यादिविषयविषयिसाधारणत्वविरहादिति भावः। धर्मे रमणीयत्वविशेषणस्य फलमाह—प्रायः स्थाणुना इत्यादि। स्थाणुना वृक्षेण। यथाक्रमं धर्मानाह—निश्चलेति। आदिना विलक्षणाकारत्वपरिग्रहः। रमणीयत्वमिति। तत्त्वं च कविप्रतिभानिर्वर्तितत्वमिति भावः। निश्चलत्वादिसाधारणधर्मसम्बन्धनिमित्तिकासु 'प्रायः स्थाणुनाऽनेन भवितव्यम्—' इत्यादि सम्भावनासु नातिव्याप्तिः, तेषां धर्माणां लौकिकत्वेन कविप्रतिभानिर्वर्तितत्वाभावेन रमणीयत्वविरहादिति भावः। 'ज्ञानम्' इत्यपहाय 'सम्भावनम्' इत्युक्तेः फलमाह—रूपकेति। निश्चयात्मके रूपकज्ञाने प्रकृतलक्षणं मातिप्रसाङ्क्षीदिति लक्षणे सम्भावनोक्तिः। ज्ञानोक्तौ तु तत्रातिप्रसङ्गो दुर्वार एवेति भावः।

अब लक्षण का विवेचन किया जाता है—लोकोत्तर इत्यादि। 'हे लोकोत्तर प्रभाव वाले राजन् ! मैं आपको उत्कृष्ट नारायण ( विष्णु ) मानता हूँ।' इस स्थल पर जब लोकोत्तर प्रभाव में नारायणत्व-व्याप्यता की सम्भावना—अर्थात् प्रायः जहाँ-जहाँ लोकोत्तर प्रभाव है वहाँ-वहाँ नारायणत्व है इस तरह की सम्भावना—रहती है तब उस लोकोत्तर प्रभाव को हेतु बनाकर नारायणत्व की अनुमिति नहीं की जा सकती, क्योंकि अनुमिति की सामग्री नहीं है अर्थात् लोकोत्तर प्रभाव में नारायणत्व-व्याप्यता की सम्भावना है, निश्चय नहीं, और अनुमिति का कारण व्याप्ति-निश्चय माना जाता है, अतः उक्त व्याप्यता-सम्भावना से 'प्रायः यह नारायण होगा' ऐसी सम्भावना उत्पन्न होगी। इस द्वितीय सम्भावना में अतिव्याप्ति न हो इसलिये लक्षण में 'जिस पदार्थ का भेद जिस पदार्थ में यथार्थतया ज्ञात हो' यह अंश कहा जाता है। आप कहेंगे—इस अंश के कहने से उक्त सम्भावना में अतिव्याप्ति का वारण कैसे होगा? तो मैं कहूँगा कि इस अंश से प्रकृत सम्भावना का आहार्य होना—बाधित रहने पर भी इच्छा से उत्पन्न होना—ज्ञात होता है अर्थात् तद्भिन्न रूप में निश्चित पदार्थ को पुनः तद्रूप समझना आहार्य ही हो सकता है और उक्त सम्भावना आहार्य—अर्थात् बाधकालिक इच्छाजन्य—नहीं है, अपितु प्रथमोत्पन्न व्याप्यता सम्भावनाजन्य है, अतः उसका वारण उक्त अंश से होता है। इसी अंश से 'रामम्-अर्थात् अत्यन्त चिकने तथा श्याम वर्णवाले राम

को वन में देखकर 'प्रायः यह मेघ होगा' इस सम्भावना से मयूर नाच रहे हैं।' इस सम्भावना (अर्थात् राम में मेघ की सम्भावना) में, एवं इसी पद्य का उत्तरार्ध 'धाराधरधिया इत्यादि अर्थात् मेघ की बुद्धि (भ्रान्ति) से मयूर मन्द-मन्द नाचते रहते थे।' यों बदल दें तो इस भ्रान्ति (अर्थात् राम में मेघ की भ्रान्ति) में अतिव्याप्ति वारित हुई—अर्थात् यह सम्भावना अथवा भ्रान्ति आहार्य (बाधकालिक ज्ञानरूप) नहीं है। यदि आहार्य होती तब उससे नाचने की प्रवृत्ति मयूरों में नहीं बन सकती थी, क्योंकि बाधितार्थ-विषयक इच्छाजन्य ज्ञान से प्रवृत्ति नहीं होती। 'वदनकमलेन—अर्थात् हे बाले! जब तू मुखकमल द्वारा मन्दहास की शोभा का एक लेश धारण करती है, मैं उसी क्षण जान लेता हूँ कि इस जगह, जगत् को कामदेव ने जीत लिया—यहाँ आनेवाला कामवशीभूत हुए विना रह नहीं सकता।' इस पद्य में जो जगत् के जय की सम्भावना वर्णित है उसमें अतिव्याप्ति को वारित करने के लिये लक्षण में 'उन दोनों पदार्थों में रहनेवाले किसी सुन्दर धर्म को निमित्त मानकर' यह अंश जोड़ा गया है। तात्पर्य यह कि उक्त सम्भावना किसी ऐसे धर्म को निमित्त मानकर नहीं की गई है, अतः इस अंश से उसका वारण हो जाता है। यद्यपि उक्त सम्भावना का निमित्त स्मित(मन्दहास)को माना जा सकता है, पर वह मन्दहासरूप धर्म साधारण नहीं है—विषय-'जगत्' और 'जीत लिया'-विषयी में से एक में भी वह नहीं रह जाता है। इसी से—'प्रायः पतेद् द्यौः—अर्थात् सम्भव है स्वर्ग गिर जाय, चन्द्र टूट जाय, पर्वतों और समुद्रोंसहित पृथ्वी विचलित हो जाय और यह तो अत्यधिक सम्भव है कि सारी दिशाएँ जल उठेंगी, क्योंकि द्रौपदी 'हाय! मरी' कहकर रो रही है।' यहाँ भी रोदन के कारणरूप 'केश पकड़ने' आदि से उत्पन्न पाप को निमित्त मानकर उठाई गई 'स्वर्ग के गिरने' आदि की सम्भावना में लक्षण की अतिव्याप्ति नहीं होती, क्योंकि पापरूप निमित्त उभय साधारणधर्म नहीं है-अर्थात्-स्वर्गरूपविषय और पतनरूप विषयी इन दोनों में से एक में भी वह (पाप) रहनेवाला नहीं होता। 'प्रायः इसे ठूँठ होना चाहिये' 'निश्चित ही यह पुरुष हो सकता है' और 'दूर खड़ा यह देवदत्त सा ज्ञात होता है', इत्यादि में क्रमशः निश्चलता, चञ्चलता और एक विशिष्ट प्रकार के आकाररूप समानधर्म को निमित्त मानकर की जानेवाली सम्भावनाओं में लक्षण की अतिव्याप्ति हो सकती है, अतः निमित्तभूत धर्म में 'सुन्दर—अर्थात् कवि-प्रतिभा-निर्मित' विशेषण दिया गया है। उक्त धर्म ऐसे नहीं हैं, अतः तन्मूलक उक्त सम्भावनाओं को उत्प्रेक्षा नहीं कहा जा सकता। रूपक के ज्ञान में अतिव्याप्ति न हो इसलिये लक्षण में 'सम्भावना' कही गई है। रूपक का ज्ञान सम्भावनारूप नहीं, किन्तु निश्चयरूप होता है।

नन्वेवमपि तदभाववत्त्वेनेत्याद्यधिकमत आह—

**अत्र च तादात्म्येन संसर्गेण धर्म्युत्प्रेक्षायाः, संसर्गान्तरेण धर्मोत्प्रेक्षायाश्च सङ्ग्रहायैकोक्त्या लक्षणद्वयं विवक्षितम्।**

अत्र चेति। लक्षणवाक्य इत्यर्थः। धर्म्युत्प्रेक्षा-धर्मोत्प्रेक्षा-भेदेनोत्प्रेक्षा द्विविधा। तत्र धर्म्यन्तरे धर्म्यन्तरोत्प्रेक्षणे प्रथमा धर्मिणि धर्मोत्प्रेक्षणे च द्वितीया भवति। धर्म्युत्प्रेक्षायां तादात्म्यं सम्बन्धः, धर्मोत्प्रेक्षायाञ्च तदितरः सामानाधिकरण्यादिः (समवायादिः)। अनयोरुभयोरुत्प्रेक्षयोः संग्रहाय लक्षणद्वयं पूर्वोक्तलक्षणवाक्ये वक्तुरभिप्रेतमिति भावः।

ऊपर जो कुछ कहा गया है वह 'जिस पदार्थ का भेद—' इत्यादि प्रथम लक्षण के विषय में ही, अतः 'जिस धर्म का अभाव—' इत्यादि द्वितीय लक्षण व्यर्थ सा प्रतीत होता है इस सन्देह की निवृत्ति के लिये कहा जाता है—अत्र च इत्यादि। अभिप्राय यह है कि उत्प्रेक्षा दो प्रकार की है—एक धर्म्युत्प्रेक्षा, जिसमें एक धर्मी की दूसरे धर्मी के रूप में उत्प्रेक्षा की जाती है, और दूसरी धर्मोत्प्रेक्षा, जिसमें धर्म की धर्मी में उत्प्रेक्षा

की जाती है। धर्म्युत्प्रेक्षा तादात्म्य ( अभेद ) सम्बन्ध द्वारा होती है और धर्मोत्प्रेक्षा अन्य सम्बन्ध ( समवाय आदि ) द्वारा। इन दोनों उत्प्रेक्षाओं का संग्रह करने के लिये मूल में एक उक्ति द्वारा दो लक्षणों का कथन अभीष्ट है। टीका में तो दोनों लक्षण पृथक्-पृथक् लिखे गये हैं।

उत्प्रेक्षां विभजते—

सा चोत्प्रेक्षा द्विविधा—वाच्या, प्रतीयमाना च। इव, नूनम्, मन्ये, जाने, अवैमि, ऊहे, तर्कयामि, शङ्के, उत्प्रेक्षे, इत्यादिभिः क्यङाचारक्विबादिभिः प्रतिपादकैः सहिता यत्रोत्प्रेक्षासामग्री, तत्र वाच्योत्प्रेक्षा। यत्र च प्रतिपादकशब्दरहितं तत्सामग्रीमात्रम्, तत्र प्रतीयमाना। यत्र तत्सामग्रीरहितं प्रतिपादकमात्रम्, तत्र सम्भावनमात्रमेव, नोत्प्रेक्षा। सापि प्रत्येकं त्रिविधा—स्वरूपोत्प्रेक्षा, हेतूत्प्रेक्षा, फलोत्प्रेक्षा चेति। तत्र जातिगुणक्रियाद्रव्यरूपाणां तदभावरूपाणां च पदार्थानां तादात्म्येनेतरेण वा सम्बन्धेन जातिगुणक्रियाद्रव्यात्मकैर्व्यस्तैः समुचितैरुपात्तैरनुपात्तैर्निष्पन्नैर्निष्पाद्यैर्वा निमित्तभूतैर्धर्मैर्यथासम्भवं जातिगुणक्रियाद्रव्यात्मकेषु विषयेषूत्प्रेक्षणं स्वरूपोत्प्रेक्षा। तत्राभेदेन संसर्गेण धर्मिस्वरूपोत्प्रेक्षा, संसर्गान्तरेण धर्मस्वरूपोत्प्रेक्षेति चोच्यते। उक्तविधेषु पदार्थेषु प्रागुक्तप्रकाराणां पदार्थानां तथाविधैरेव निमित्तैर्यथासम्भवं हेतुत्वेन फलत्वेन च सम्भावनं हेतूत्प्रेक्षा फलोत्प्रेक्षा चोच्यते। एताश्च कश्चिन्निष्पन्नशरीराः कश्चिन्निष्पाद्यशरीराश्चेत्येवमाद्यनल्पविकल्पाः सम्पद्यन्ते। तथापि दिङ्मात्रमुपदर्श्यते।

प्रतीयमानेति। अर्थसामर्थ्यावसेयेत्यर्थः। न तु व्यङ्ग्येति भावः। एतच्चाग्रे मूल एव स्फुटीभविष्यति। उत्प्रेक्षासामग्रीति। सा च रमणीयतद्धर्मसम्बन्धादिरूपा। प्रतिपादकशब्देति। इवादीत्यर्थः। नोत्प्रेक्षेति। अलङ्कारत्वन्नेत्यर्थः। पुनरन्यथा विभजते—साऽपीति। एवं च द्वादश भेदाः सम्पन्ना इति भावः। स्वरूपोत्प्रेक्षादीनां स्वरूपपरिचयायाह—तत्रेति। तासां तिसृणां मध्य इत्यर्थः। द्रव्येति। संज्ञाशब्दाभिप्रायमिदम्। एवमग्रेऽपि। व्यस्तैरिति। पृथग्भूतैरित्यर्थः। समुचितैरिति। मिलितैरित्यर्थः। उपात्तैः शब्दबोधितैः। अनुपात्तैः शब्दाबोधितैः। अर्थसामर्थ्यलब्धैरिति यावत्। निष्पन्नैः स्वतः सिद्धैः। निष्पाद्यैः कल्पनया साध्यमानैः। विषयेष्विति। प्रकृतेष्वित्यर्थः। जात्यादीन् निमित्तीकृत्य जात्यादिषु विषयेषु जात्यादिरूपाणाम् विषयिणां सम्भावनं स्वरूपोत्प्रेक्षेति सारांशः। उक्तमेव विशदयति—तत्रेति। तासां स्वरूपोत्प्रेक्षाणां मध्य इत्यर्थः। हेतूत्प्रेक्षाफलोत्प्रेक्षे आह—उक्तेति। जात्यादिष्वित्यर्थः। एवमग्रेऽपि। जात्यादिषु पदार्थेषु जात्यादिभिर्निमित्तैर्जात्यादेः पदार्थस्य हेतुत्वेन फलत्वेन च सम्भावनम्-अर्थात् जात्यादिरूपः पदार्थो जात्यादिरूपं पदार्थं प्रति हेतुः फलं वा यत्र सम्भाव्यते तत्र-हेतुफलोत्प्रेक्षे भवत इति भावः। पुनरपरथा विभजते-एताश्चेति। पूर्वोक्ता उत्प्रेक्षा इत्यर्थः। निष्पन्नेति। स्वतःसम्भविपदार्थगता इति भावः। निष्पाद्येति। कविकल्पितपदार्थगता इति भावः। अनल्पेति। बह्वित्यर्थः। तथापीति। तेषां सर्वेषां प्रभेदानामुपदर्शनस्याशक्यत्वेऽपीत्यर्थः।

उत्प्रेक्षा के भेद किए जाते हैं—सा च इत्यादि। पूर्वोक्त उत्प्रेक्षा दो प्रकार की है—वाच्या और प्रतीयमाना ( प्रतीयमाना का अर्थ व्यङ्ग्या नहीं है, किन्तु अर्थतः अवगत होनेवाली, यह समझ रखना चाहिए )। जहाँ संस्कृत में इव आदि मूलोक्त उत्प्रेक्षा-बोधक शब्दों एवम् हिन्दी में मानो आदि तद्बोधक शब्दों से युक्त उत्प्रेक्षा की सामग्री ( सुन्दर विषयि-गत धर्म-सम्बन्ध आदि ) हो वहाँ वाच्योत्प्रेक्षा कहलाती है। और जहाँ

बोधक शब्द न हों, किन्तु केवल सामग्री हो वहाँ प्रतीयमानोत्प्रेक्षा कहलाती है। जहाँ सामग्री न हो और उत्प्रेक्षा-बोधक शब्द हों, वहाँ केवल 'सम्भावना' मानी जाती है उत्प्रेक्षा नहीं—अर्थात् वहाँ सम्भावना को अलङ्काररूप नहीं माना जाता। ये उत्प्रेक्षाएँ प्रत्येक तीन-तीन प्रकार की होती हैं—स्वरूपोत्प्रेक्षा, हेतूत्प्रेक्षा और फलोत्प्रेक्षा। फलतः उत्प्रेक्षा के बारह भेद इस तरह से सम्पन्न होते हैं। जैसे—वाच्यधर्मिस्वरूपोत्प्रेक्षा, प्रतीयमानधर्मिस्वरूपोत्प्रेक्षा, वाच्यधर्मस्वरूपोत्प्रेक्षा, प्रतीयमानधर्मस्वरूपोत्प्रेक्षा, वाच्यधर्मिहेतूत्प्रेक्षा, प्रतीयमानधर्मिहेतूत्प्रेक्षा, वाच्यधर्महेतूत्प्रेक्षा, प्रतीयमानधर्महेतूत्प्रेक्षा, वाच्यधर्मिफलोत्प्रेक्षा, प्रतीयमानधर्मिफलोत्प्रेक्षा, वाच्यधर्मफलोत्प्रेक्षा और प्रतीयमानधर्मफलोत्प्रेक्षा। संसार के सभी पदार्थ जाति, गुण, क्रिया और द्रव्य( संज्ञाशब्दस्थल में )रूप तथा इन चारों के अभावरूप हैं। इन पदार्थों की, अभेदसम्बन्ध द्वारा अथवा अन्य किसी सम्बन्ध द्वारा, जाति, गुण, क्रिया और द्रव्यरूप—पृथक्-पृथक् अथवा मिलित, शब्दद्वारा वर्णित अथवा अवर्णित और सिद्ध अथवा साध्य—धर्मों को निमित्त मानकर, यथासम्भव, जाति, गुण, क्रिया और द्रव्यरूप विषयों (प्रकृत पदार्थों) में, उत्प्रेक्षा करना स्वरूपोत्प्रेक्षा कहलाती है।, उक्त तरह के पदार्थों की, उक्त तरह के पदार्थों में, उक्त तरह के निमित्तों द्वारा, यथासम्भव, हेतुरूप से अथवा फलरूप से सम्भावना की जाय तो क्रमशः हेतूत्प्रेक्षा और फलोत्प्रेक्षा कहलाती है। इन उत्प्रेक्षाओं का शरीर ( स्वरूप ) कहीं सिद्ध होता है (अर्थात् सर्वांश में स्वतःसम्भवी पदार्थों को लेकर बना रहता है) और कहीं साध्य (अर्थात् अंश विशेष में अथवा सर्वांश में कविकल्पित पदार्थों को लेकर बना रहता है)। इस तरह ऐसे अत्यधिक विकल्प बन सकते हैं, तथापि यहाँ उनका दिग्दर्शन मात्र कराया जाता है।

उदाहरणप्रदर्शनप्रसङ्गे प्रथमं जातिस्वरूपोत्प्रेक्षोदाहरणप्रदर्शनायाह—

आख्यायिकायां जात्यवच्छिन्नस्वरूपोत्प्रेक्षा यथा—

जात्यवच्छिन्नेति। जातिविशिष्टस्य धर्मिणो धर्म्यन्तरे तादात्म्येनोत्प्रेक्षेत्यर्थः।

जात्यवच्छिन्न पदार्थ के स्वरूप की उत्प्रेक्षा ( आख्यायिका में ), जैसे—

उदाहरणमुपन्यस्यति—

'तनयमैनाकगवेषणलम्बीकृतजलधिजठरप्रविष्टहिमगिरिभुजायमानाया भगवत्या भागीरथ्याः सखी' इति।

यमुनावर्णनम्—इयं, यमुना, तस्या भगवत्या ऐश्वर्यविशेषशालिन्याः, भागीरथ्याः गङ्गायाः, सखी, विद्यते, या, तनयस्य, मैनाकस्य तदाख्यपर्वतविशेषस्य, गवेषणाय अन्वेषणाय, लम्बीकृतः दीर्घीकृतः, तथा जलधेः समुद्रस्य, जठरे उदरे, प्रविष्टश्च यो हिमगिरेर्हिमालयस्य, भुजो बाहुः, स इवाचरतीत्यर्थः।

उदाहरण दिखलाया जाता है—तनय इत्यादि। यमुना का वर्णन है। यह यमुना उस ऐश्वर्यशालिनी गङ्गा की सखी है, जो अपने पुत्र मैनाक ( एक पर्वत ) को ढूँढ़ने के लिये लम्बी की हुई और समुद्र के उदर में घुसी हुई, हिमालय पर्वत की भुजा सा आचरण करती है।

उपपादयति—

अत्र भागीरथ्यां द्रव्ये जातौ वा हिमगिरिसम्बन्धी भुजत्वजात्यवच्छिन्नस्तादात्म्येनोत्प्रेक्ष्यते। तत्र च भागीरथीगतानां श्वैत्यशैत्यलम्बत्वजलधिजठरप्रविष्टत्वानां धर्माणाम् निमित्ततासिद्धये विषयिहिमगिरिभुजगतत्वमवश्यं सम्पादनीयम्। तेषां च मध्येऽनुपात्तयोः श्वैत्यशैत्ययोर्हिमगिरिसम्बन्धित्वादेव भुजगतत्वं सम्पन्नम्। इतरयोरपि सम्पादनाय तनयमैनाकगवेषणं फलमुत्प्रेक्षितम्,

तत्साधनताज्ञानस्य लम्बत्वजलधिजठरप्रवेशानुकूलयत्नजनकत्वात् । एवं च विषयिगततादृशगवेषणफलकलम्बत्वजलधिजठरप्रविष्टत्वाभ्यां विषयगतयोः साहजिकलम्बत्वजलधिजठरप्रविष्टत्वयोरभेदाध्यवसानातिशयोक्त्या साधारण्यसम्पत्तौ निमित्तता । न चात्र फलस्याप्युत्प्रेक्षेति वक्तुं शक्यम् । उत्प्रेक्ष्यमाणफलनिष्पादितनिमित्तोत्थापितायां स्वरूपोत्प्रेक्षायामेव विधेयत्वाच्चमत्कृतेर्विश्रमात्, उत्प्रेक्षाप्रतिपादकस्य प्रत्ययस्य फलेनानन्वयाच्च, तयैवात्र व्यपदेशो युक्तः । अनिगीर्णविषया चेयमुपात्तानुपात्तगुणक्रियात्मकनिमित्ता निष्पाद्यविशिष्टशरीरा जात्युत्प्रेक्षा, हिमगिरिभुजस्य कविनैव निष्पादितत्वात् ।

द्रव्ये जातौ वेति । संज्ञाशब्दवाच्यायां जातिशब्दवाच्यायां वेत्यर्थः । तत्र चेति । तेषां चेति । उक्तधर्मा-
तस्मिन्नुत्प्रेक्षण इत्यर्थः । अस्य च 'निमित्ततासिद्धये' इत्यत्रान्वयः । लंबत्वजलधिजठरप्रविष्टत्वयोरित्यर्थः । तत्साधनतेति । गवे-
णामित्यर्थः । इतरयोरपीति । अन्यथा गवेषणासम्भवादिति भावः । विषयिगतेति ।
षणसाधनतेत्यर्थः । यत्नेति । तनयमैनाकेत्यर्थः । विषयेति । भागीरथी-
विषयिहिमगिरिभुजगताभ्यामित्यर्थः । तादृशेति । अभेदाध्यवसानेति । विषयनिगरणपूर्वकाभेदा-
त्यर्थः । साहजिकेति । स्वाभाविकेत्यर्थः । सम्पत्ताविति । सिद्धावित्यर्थः ।
रोपेत्यर्थः । तन्मूलकयातिशयोक्त्येति समुदितार्थः । गवेषणेत्यर्थः । निमित्तेति ।
शङ्कते—न चेति । समाधत्ते—उत्प्रेक्ष्यमाणेति । फलेति । विधेयत्वादिति । विधेयत्वेन प्राधान्यादि-
साधारणीकृतलम्बत्वजलधिजठरप्रविष्टत्वेत्यर्थः । विनिगमनाविरहादाह—उत्प्रेक्षाप्रतिपादकस्येति । प्रत्ययस्य
त्यर्थः । चमत्कृतिविश्रमे गवेषणेनेत्यर्थः । उपसंहरति—तयैवेति । एवं
क्यङः । तदर्थस्येति भावः । फलेनेति । अनिगीर्णेति । भागीरथ्या
चेत्यादिः । स्वरूपोत्प्रेक्षयैवेत्यर्थः । अत्र भेदानुपपादयति—अनिगीर्णेति । न तु यथासंख्यम् ।
उपादानादिति भावः । उपात्तेति । इदं च यथासम्भवं बोध्यम् । गुणौ च श्वैत्यशैत्यात्मकावनुपात्ताविति ग्रन्थासङ्गतिः
तथात्वे गुणयोरेवोपात्ततासिद्धिः, एवं चैकदेशस्य सिद्धत्वेऽपि विशिष्टस्य निष्पाद्यत्वं
स्यात् । निष्पाद्यत्वे हेतुमाह—हिमेति । अयमत्र विशदोऽर्थः—'तनयमैनाक—' इतिगद्यवाक्ये गङ्गायां
स्पष्टमेवेति भावः । बाहु( भुज )पदञ्च बाहुत्वजातिविशिष्टवाचकमिति जाति-
हिमालयबाहुरभेदेनोत्प्रेक्ष्यते । तदाऽत्र द्रव्ये जातिस्वरूपोत्प्रेक्षा,
स्वरूपोत्प्रेक्षेयम् । भागीरथीपदञ्च यदि संज्ञाशब्दरूपम् स्वीक्रियते तदा
यदि पुनस्तत्पदम् कल्पभेदाभिप्रायेण भागीरथीत्वजातिविशिष्टवाचकम्
जातौ जातिस्वरूपोत्प्रेक्षेति त्वन्यत् । अस्याञ्चोत्प्रेक्षायां श्वैत्यशैत्यलम्बत्वजलधिजठरप्रविष्ट-
त्वात्मकाश्चत्वारः साधारणा धर्मा निमित्ततामुपयान्ति । कथमेषां साधारणतेति चेत् ?
इत्थम्—भागीरथ्यां विषयभूतायां ते धर्माः स्वतःसिद्धा एव । विषयिभूते हिमालयभुजेऽपि
अनुक्ते श्वैत्यशैत्ये भुजस्य हिमालयीयतया सिद्धप्राये । लम्बत्वसमुद्रोदरप्रविष्टत्वे यद्यपि
भुजविशेषणतयैव शब्दबोधिते तथापि गङ्गायामिव भुजेन तयोः सिद्धत्वम्, अतस्तयो-
र्भुजगतत्वसिद्धये प्रयासोऽपेक्षितः, स च प्रयासः तनयमैनाकगवेषणरूपफलोत्प्रेक्षात्मकः
कविनाऽत्र कृतः । ननु कथं तेन प्रयासेन तयोर्भुजगतत्वसिद्धिरिति चेत् ? लम्बीकृते
समुद्रोदरप्रविष्टे च भुजे गवेषणसाधनताज्ञानवता हिमालयेन ( भुजे लम्बत्वं समुद्रोदर-
प्रविष्टत्वञ्च येन स्यात् तादृशः ) यत्नोऽवश्यं कृतोऽभूदित्यनुमित्या भुजे तयोः सिद्धिरिति
बोध्यम् । एवमपि यद्यपि विषयिभुजगते ते यत्नपूर्वके गवेषणफलके च, विषयगङ्गागते
पुनस्ते स्वाभाविके इति मिथो भिन्न एवेति न तयोः साधारणता, तथापि तयोरभेदाध्यव-

सानमूलकातिशयोक्तेरङ्गीकारेणैक्यात्साधारणता सम्पद्यते । एवञ्च साधारणीभूतान् तान् चतुरो धर्मान् निमित्तीकृत्योक्तोत्प्रेक्षा क्रियते । यद्यप्यत्र गवेषणात्मकफलस्याप्युत्प्रेक्षणमिति सत्यम् , तथापि नात्र तद्व्यवहारः, व्यवहारस्य प्रधानानुरोधित्वात् । प्राधान्यञ्चात्र चमत्कृतिविश्रमधामभूताया विधेयाया उत्प्रेक्ष्यमाणफलनिष्पादितनिमित्तोत्थापितायाः स्वरूपोत्प्रेक्षाया एव । किञ्चात्रोत्प्रेक्षा वाच्या, वाचकश्च 'भुजायमान-' पदगतः क्यङ्प्रत्ययः, तदर्थस्य च भुजपदार्थेनैवान्वयः, न फलीभूतेन गवेषणेनेति कथं फलोत्प्रेक्षाव्यवहारः स्यात् ? अत्र च भागीरथीरूपो विषय उपात्त एव, न निगीर्णः, एवम् निमित्तभूतेषु प्रागुक्तेषु धर्मेषु, लम्बत्वजलधिजठरप्रविष्टत्वरूपौ क्रियात्मकौ धर्मावुक्तौ, श्वैत्यशैत्यरूपौ च गुणात्मकौ धर्मौ अनुक्तौ इति अनिगीर्णविषया उपात्तानुपात्तोभयविधधर्मनिमित्ता चेयं जातिस्वरूपोत्प्रेक्षा निष्पाद्या । ननु निष्पाद्यत्वं कुतः, विषयरूपाया गङ्गाया निष्पन्नत्वादिति चेन्न, विषयिणो हिमगिरिभुजस्य कविनैव निष्पादिततया विशिष्टस्य निष्पाद्यत्वाक्षतेः । इति ।

उपपादन किया जाता है—अत्र इत्यादि । 'तनयमैनाक—' इस गद्यवाक्य में यदि भागीरथी-पद को एकव्यक्तिवाचक (अर्थात् संज्ञाशब्द) माना जाय तो गङ्गारूप द्रव्य में, और यदि कल्प-भेद से अनेक-व्यक्तिवाचक (अर्थात् जाति-शब्द) माना जाय तो जाति में हिमालय से सम्बन्ध रखनेवाले 'भुजत्व' जाति से अवच्छिन्न (विशिष्ट) पदार्थ (अर्थात् 'भुज') की, अभेदसम्बन्ध द्वारा, उत्प्रेक्षा की जाती है। इस उत्प्रेक्षा में, श्वेतता, शीतलता, लम्बता और समुद्रोदरप्रविष्टता ये चार धर्म साधारण ( गङ्गा तथा भुज दोनों में वृत्ति ) होकर निमित्त होते हैं। अब ये चारों धर्म साधारण कैसे होते हैं यह समझिए—गङ्गा में ये चारों धर्म स्वतः रहते ही हैं, भुज में भी हिमालय के सम्बन्धी होने से वाक्य में अनुक्त दो धर्म (श्वेतता तथा शीतलता) सिद्ध हो जाते हैं। अब बचे लंबता तथा समुद्रोदर-प्रविष्टता ये शब्दोक्त दो धर्म। ये दोनों यद्यपि भुज के ही विशेषण बनाए गए हैं वाक्य में, तथापि वस्तुतः ये गङ्गा के ही धर्म हैं, भुज के नहीं, अतः इन्हें भुजगत सिद्ध करने के लिये उपाय अपेक्षित है, वही उपाय 'तनयमैनाक-गवेषणात्मक-फल' की उत्प्रेक्षा के रूप में कविद्वारा किया गया है—अर्थात् 'पुत्र मैनाक को ढूँढ़ने के लिये' इस रूप में की गई उत्प्रेक्षा से उक्त दोनों धर्मों की भुजवृत्तिता सिद्ध हो जाती है, क्योंकि जब हिमालय को लंबे बनाए गए और समुद्र के उदर में घुसे हुए भुज में उक्त गवेषण-साधनता का ज्ञान हुआ होगा-अर्थात् जब हिमालय ने यह समझा होगा कि लंबीकृत तथा समुद्रोदरप्रविष्ट भुज द्वारा ही पुत्र मैनाक को समुद्र में खोजा जा सकता है तब उन्होंने ( हिमालय ने ) अवश्य ही भुज को लंबा और समुद्रोदरप्रविष्ट बनाने के उपयुक्त यत्न किया होगा यह अनुमान करना कोई कठिन नहीं है, क्योंकि 'तत्साधनता का ज्ञान तत्साधनतोपयोगी पदार्थ के उत्पादक यत्न का जनक होता है' यह एक नियम-सिद्ध बात है। यद्यपि इतना-सब कुछ-करने पर भी उक्त दोनों धर्म वस्तुतः साधारण हुए नहीं, क्योंकि भुज में रहनेवाले लम्बत्व और समुद्रोदरप्रविष्टत्व उक्तरीति से यत्नपूर्वक तथा गवेषणरूप फल वाले हैं और गङ्गा में रहने वाले वे दोनों धर्म स्वाभाविक तथा उक्त फल से शून्य हैं, फलतः ये केवल एक-एक में रहनेवाले भिन्न ही धर्म हैं-इनमें से कोई भी धर्मद्विक दोनों में रहनेवाला नहीं, तथापि विषयी (भुज) गत उक्त दोनों धर्मों के साथ विषय (गङ्गा) गत उक्त दोनों धर्मों का अभेदाध्यवसान मान लिया जाता है-अर्थात् एक तरह की अतिशयोक्ति मान ली जाती है जिससे वस्तुतः भिन्न होने पर भी विषयि-गत तथा विषयगत वे धर्म एक समझ लिये जाते हैं, अतः ये दोनों धर्म भी साधारण हो जाते हैं। श्वेतता तथा शीतलतारूप धर्म साधारण हो ही चुके हैं। इस तरह ये चारो धर्म उक्त उत्प्रेक्षा में निमित्त होते हैं। यदि कोई कहे कि यहाँ स्वरूपोत्प्रेक्षा क्यों कही जा रही है ? यहाँ फल ( गवेषण ) की भी तो उत्प्रेक्षा है, अतः फलोत्प्रेक्षा ही क्यों

नहीं व्यवहृत होती ? तो इसका समाधान यह है कि-एक तो, जिस फलोत्प्रेक्षा की बात आप कर रहे हैं उसके द्वारा सिद्ध किए गए निमित्त ( लम्बत्व तथा समुद्रोदरप्रविष्टत्व ) से उठाई गई 'स्वरूपोत्प्रेक्षा' ही यहाँ विधेय है-प्रधान है, अतः चमत्कार का विश्राम वहीं जाकर होता है, फलोत्प्रेक्षा में नहीं। दूसरे, उत्प्रेक्षावोधक प्रत्यय—'भुजायमान' पदान्तर्गतक्यङ्-का फल के साथ अन्वय नहीं है, किन्तु भुज के साथ है। ऐसी स्थिति में स्वरूपोत्प्रेक्षा का व्यवहार होना ही समुचित है। यह जातिस्वरूपोत्प्रेक्षा, विषयवाचक गङ्गापद के पृथक् विद्यमान रहने के कारण, अनिगीर्णविषया, और लम्बत्व तथा समुद्रोदरप्रविष्टत्व इन दो क्रियात्मक धर्मों के उपात्त ( उक्त ) रहने के कारण, उपात्तनिमित्ता, एवम् श्वेतता तथा शीतलता इन दो गुणात्मक धर्मों के अनुपात्त रहने के कारण, अनुपात्तनिमित्ता भी, और कवि-कल्पित हिमालयभुजरूपविषयी से युक्त होने के कारण, निष्पाद्या है। आप कहेंगे-उक्त विषयी के निष्पाद्य होने पर भी गङ्गारूप विषय तो स्वतोनिष्पन्न ही है, ऐसी दशा में उत्प्रेक्षा को निष्पाद्य कैसे कहते हैं ? तो इसका उत्तर है कि विषयी तथा विषय दोनों मिलकर ही तो उत्प्रेक्षारूप होते हैं, फिर उन दोनों में से एक का भी निष्पाद्य होने पर विशिष्ट को निष्पाद्य कहा ही जा सकता है।

भेदान्तरमुदाहर्तुमाह—

तादात्म्येन गुणस्वरूपोत्प्रेक्षा यथा—

अभेदसम्बन्ध से गुणस्वरूपोत्प्रेक्षा जैसे—

उदाहरणमुपन्यस्यति—

'अम्भोजिनीबान्धवनन्दनायां कूजद्बकानां समजो विरेजे।
रूपान्तराक्रान्तगृहः समन्तात् पुञ्जीभवञ्शुक्ल इवाश्रयार्थी ॥'

कविर्यमुनां वर्णयति—अम्भोजिनीबान्धवस्य सूर्यस्य, नन्दनायां तनयायां यमुनायामिति यावत्, कूजतां शब्दायमानानां, बकानाम्, समजः सङ्घः, रूपान्तरेण श्यामत्वेन, आक्रान्तं बलाद् व्याप्तम्, गृहम्, यस्य तादृशः, अतः, समन्तात् सर्वतः, पुञ्जीभवन् एकत्र समुपतिष्ठन्, आश्रयार्थी स्थितिस्थानाभिलाषी, शुक्लः शुक्लगुणः, इव, विरेजे शुशुभे इत्यर्थः।

उदाहरण का निर्देश किया जाता है—अम्भोजिनी इत्यादि। अम्भोजिनीबान्धव ( सूर्य ) की नन्दना ( कन्या यमुना ) में कूजते हुए बगुलों का झुंड ऐसा शोभित हुआ, मानो, दूसरे रूप ( कालापन ) से जिसका गृह आक्रान्त हो गया है वह अतएव सब तरफ से इकट्ठा हो रहा आश्रय की इच्छावाला शुक्लगुण ( श्वेतवर्ण ) हो।

उपपादयति—

अत्रैकाधिकरण्यापन्ने कूजनविशिष्टे बकत्वजात्यवच्छिन्ने विषये पुञ्जीभवनविशिष्टः शुक्लगुणस्तादात्म्येनोत्प्रेक्ष्यते। तत्र बकगतानां कूजननैर्मल्यपुञ्जीभवनानां शुक्लगुणगतत्वमन्तरेण बकशुक्लयोरभेदस्य दुरुपपादत्वात्तत्सिद्धये तेषां विषयिगतत्वं साध्यम्। तत्र नैर्मल्यस्यानुपात्तस्य यथाकथञ्चिदुत्प्रेक्ष्यमाणे विषयिणि सिद्धत्वात् कूजनपुञ्जीभवनयोर्निष्पादनाय रूपान्तराक्रान्तगृहत्वमाश्रयार्थित्वं च हेतुत्वेनोत्प्रेक्षितम्। इहापि प्राग्वत् साहजिकयोः कल्पिताभ्यामभेदाध्यवसानात् साधारण्यम्। एवमन्यत्राप्यूह्यम्। पूर्वं हि यथा फलस्योत्प्रेक्षणेऽपि न फलोत्प्रेक्षा तथेहापि हेतोरिति।

अत्रेति। 'अम्भोजिनी—' इति पद्ये इत्यर्थः। ऐकाधिकरण्यापन्न इति। समुदायापन्न इत्यर्थः। तत्रेति। तयोर्विषयविषयिणोर्मध्य इत्यर्थः। अन्तरेणेति। विनेत्यर्थः।

तत्सिद्धये शुक्लगुणगतत्वसिद्धये । तेषामुक्तधर्माणाम् । विषयीति । शुक्लगुणेत्यर्थः । तत्र तेषां धर्माणां मध्ये । नैर्मल्यस्य गुणात्मकस्य धर्मात्मकस्य वा द्रव्यवृत्तिता, न शुक्लादिगुणवृत्तितेत्यत आह—यथाकथंचिदिति । गुणगतदोषविशेषाभाववत्त्वस्य नैर्मल्यपदेन विवक्षणादिति भावः । नन्वेवं कूजनपुञ्जीभवनयोर्विषयिणि सिद्धत्वेऽपि विषयगताभ्यां ताभ्यां भिन्नत्वेन कथं साधारण्यमित्यत आह—इहापीति । इदमुपलक्षणम् । नैर्मल्ययोरपि विषयविषयिगतयोर्भिन्नत्वेनाभेदारोपादेव साधारण्यं बोध्यम् । ननु रूपान्तराक्रान्तगृहत्वाश्रयार्थित्वयोर्हेतुत्वेनोत्प्रेक्षणे हेतूत्प्रेक्षैवेयं कुतो नेत्यत आह—पूर्वं हीति । अयं भावः-बकत्वजातिविशिष्टबकरूपद्रव्ये विषये शुक्लगुणस्य विषयिणस्तादात्म्येनोत्प्रेक्षणात् 'अम्भोजिनी—' इत्यस्य गुणस्वरूपोत्प्रेक्षोदाहरणत्वं सम्पद्यते । अस्मिश्चोत्प्रेक्षणे कूजननैर्मल्यपुञ्जीभवनात्मका धर्माः साधारणाः सन्तो निमित्तभावं भजन्ते । ननु कथमेषां साधारण्यमिति चेदित्थम्-बकवृत्तिता स्पष्टैवैषाम् । नैर्मल्यस्य पुनः कथञ्चित् शुक्लगुणवृत्तितापि सिद्धैव । कूजनपुञ्जीभवनयोः शुक्लगुणवृत्तिता रूपान्तराक्रान्तगृहत्वाश्रयार्थित्वयोर्हेतुत्वेनोत्प्रेक्षणान्निष्पद्यते, अन्याक्रान्तगृहाणामाश्रयार्थिनाञ्च शब्दायमानत्वस्य सङ्घीभवनस्य च लोकप्रसिद्धत्वात् । न चैवमपि विषयगतेभ्यस्तेभ्यो विषयिगतास्ते भिन्ना एव भवेयुरिति कथं साधारण्यमिति शङ्क्यम्, अभेदाध्यवसानेनैकत्वाङ्गीकारात् । हेतूत्प्रेक्षणे सत्यपि हेतूत्प्रेक्षाव्यपदेशस्तु न शक्यते विधातुम्, प्रागृवत् हेतूत्प्रेक्षाया निमित्तमात्रनिष्पादकतया गुणत्वेनाचमत्कारित्वात् । स्वरूपोत्प्रेक्षा तु प्रधाना चमत्कृतिभूमिरिति भवति तया व्यपदेश इति ।

उपपादन किया जाता है—अत्रैकाधिकरण्यापन्न इत्यादि । 'अम्भोजिनी—' इस पद्य में 'एकत्र स्थित' और 'कूजन'-युक्त बकत्व जाति से अवच्छिन्न बगुलारूप विषय—अर्थात् जातिरूप पदार्थ—में इकट्ठे हो रहे शुक्लगुण की अभेदसम्बन्ध से उत्प्रेक्षा होती है यहाँ बगुलों में रहनेवाले कूजन, निर्मलत्व और पुञ्जीभवन ( इकट्ठे होना ) इन तीन धर्मों की सिद्धि जब तक शुक्लगुण में भी न हो तब तक बगुलों और शुक्लगुण का अभेद सिद्ध होना कठिन है। अतः उन धर्मों की स्थिति विषयी ( शुक्लगुण ) में साधनीय है । उनमें से अनुपात्त धर्म (निर्मलत्व) की स्थिति किसी तरह विषयी (शुक्लगुण) में सिद्ध हो जाती है। ('किसी तरह' कहने का अभिप्राय यह है कि-वस्तुतः निर्मलता स्वयं गुणरूप है, अतः वह किसी द्रव्य में ही रह सकती है, पर यहाँ 'मल'-अर्थात् किसी तरह का दोष, उसका अभाव ही 'निर्मलता' से विवक्षित है जो गुण में भी रह सकता है )। अब अवशिष्ट रहे 'कूजन' और 'पुञ्जीभवन' ये दो धर्म। इन दोनों धर्मों की सिद्धि शुक्लगुण में करने के लिये 'दूसरे रङ्ग से आक्रान्त गृह वाले होने' की और 'आश्रय की इच्छा वाले होने' की हेतुरूप से उत्प्रेक्षा की गई है । तात्पर्य यह कि हेतुरूप से उक्त दोनों बातों की उत्प्रेक्षा करने से शुक्लगुण में भी 'कूजन' और 'पुञ्जीभवन' की सिद्धि हो जाती है, क्योंकि जिनका घर दूसरों से आक्रान्त हो जाता है तथा जो दूसरों के यहाँ आश्रय चाहते हैं वे जोर-जोर से शब्द करते हैं और इकट्ठे हो जाते हैं यह बात लोकप्रसिद्ध है । यहाँ भी पूर्वोक्त उदाहरण की तरह स्वाभाविक विषय बकगत उन धर्मों का कल्पित विषयि (शुक्ल) गत उन धर्मों के साथ अभेद मान लेने से इन धर्मों की साधारणता ( दोनों में रहना ) सिद्ध होती है । इसी तरह अन्यत्र भी तर्क कर लेना चाहिये । प्रथम उदाहरण में जैसे फल के उत्प्रेक्षित होने पर भी फलोत्प्रेक्षा नहीं व्यवहृत होती, वैसे यहाँ भी हेतु के उत्प्रेक्षित होने पर भी हेतूत्प्रेक्षा नहीं व्यपदिष्ट होती है । अभिप्राय यह है कि यहाँ की हेतूत्प्रेक्षा भी केवल स्वरूपोत्प्रेक्षा के निमित्त को सिद्ध करने के लिये की गई है, अतः अनुवाद्य है-गौण है, उसमें कोई चमत्कार नहीं अनुभूत

होता, इसलिये उसका व्यवहार करना उचित नहीं और स्वरूपोत्प्रेक्षा तो प्रधान है-विधेय है, चमत्कारयुक्त है, अतः उसका व्यवहार करना समुचित है।

भेदान्तरमुदाहर्तुमाह—

क्रियास्वरूपोत्प्रेक्षा यथा—

अभेदसम्बन्धेन क्रियास्वरूपं यत्रोत्प्रेक्ष्यते तादृशमुदाहरणं यथेति भावः।

अभेदसम्बन्धमूलक क्रिया-स्वरूप की उत्प्रेक्षा, जैसे—

उदाहरणमुपन्यस्यति—

'कलिन्दजानीरभरेऽर्धमग्ना बकाः प्रकामं कृतभूरिशब्दाः।
ध्वान्तेन वैराद् विनिगीर्यमाणाः क्रोशन्ति मन्ये शशिनः किशोराः॥'

यमुनावर्णनप्रसङ्गे कविः यमुनाजलेऽर्धमग्नान् बकान् वर्णयति–कलिन्दजाया यमुनायाः, नीरभरे जलसमूहे, अर्धमग्नाः ब्रुडितकायार्धाः, तथा; प्रकामं यथेच्छम्, कृतभूरिशब्दाः विहितबहलकोलाहलाः, बकाः, वैरात् द्वेषात्, ध्वान्तेन तमसा, विनिगीर्यमाणाः कवलीक्रियमाणाः, शशिनः चन्द्रस्य, किशोराः शिशवः, सन्तः, क्रोशन्ति आक्रोशं कुर्वन्तीति मन्ये इत्यर्थः।

उदाहरण दिखलाया जाता है—कलिन्द इत्यादि। यमुनावर्णन-प्रसङ्ग में कवि जल के भीतर शरीर के आधे हिस्से को डुबा कर तैरते हुए बकों का वर्णन करता है—यमुना के जल में आधे डूबे और यथेच्छ कोलाहल करते हुए बगुले ऐसे ज्ञात होते हैं, मानो, द्वेष के कारण, अन्धकार द्वारा निगले जाते चन्द्रमा के बच्चे चिल्ला रहे हों।

शाब्दबोधप्रदर्शनपुरस्सरमुपपादयति—

अत्र प्रथमान्तविशेष्यकबोधवादिनामभेदसंसर्गेण कलिन्दजानीरार्धमग्न-कृतभूरिशब्दोभयविशिष्टेषु बकेषु विषयेषु ध्वान्तकर्तृकवैरहेतुकनिगरणकर्माभिन्नोत्प्रेक्षितशशिकिशोरतादात्म्योत्प्रेक्षणपूर्वकं क्रोशनकर्तृत्वं धर्म उत्प्रेक्ष्यते। तत्र तादात्म्योत्प्रेक्षणे धर्म्युत्प्रेक्षायां साधारणो धर्मः, सम्बन्धान्तरेणोत्प्रेक्षणे धर्मोत्प्रेक्षायां तत्समानाधिकरणो धर्मश्च विषयगतो निमित्तमिति स्थिते प्रकृते क्रोशनकर्तृत्वरूपधर्मोत्प्रेक्षायां तत्समानाधिकरणनिगरणकर्मत्वरूपधर्मस्य विषयगतत्वसिद्धयेऽनुवाद्यतया शशिकिशोरतादात्म्यमनुपात्तश्चैत्यनिमित्तकमुत्प्रेक्ष्यते। तत्र यथा विशिष्टोपमायामुपमानोपमेयविशेषणतद्विशेषणानामार्थमौपम्यम्, एवमत्रापि विषयबकविशेषणतद्विशेषणयोरर्धमज्जनयमुनाजलयोर्मूलोत्प्रेक्षाविषयिशशिकिशोरविशेषणतद्विशेषणाभ्यां निगरणध्वान्ताभ्यामभेद आर्थः, ततश्च ध्वान्तकर्तृकनिगरणे सिद्धे मुख्योत्प्रेक्षानिर्वाहः। क्रोशनशब्दयोरपि बिम्बप्रतिबिम्बभावेनाभेदः। तेन कलिन्दजानीरार्धमग्नकृतभूरिशब्दोभयाभिन्ना बका ध्वान्तनिगीर्यमाणशशिकिशोरोभयाभिन्नाः क्रोशनक्रियानुकूलव्यापारवन्त इवेति बोधाकारः। आख्याते भावप्राधान्ये त्वभेदेन क्रोशनक्रियोत्प्रेक्षा। तत्र शाब्दे वृत्ते बकविशेषणतया प्रतीयमानमपि शब्दनं विषयतयाऽवतिष्ठते, अध्यवसानवशात्। क्रोशनक्रियायां च तादृशबका विशेषणम्, तादृशबकेषु चाभेदेन तादृशशशिकिशोराः, न तु शशिकिशोरा एव साक्षात्क्रियायाम्। एवं च बकानामनन्वयापत्तेः। विषयविषयिविशेषणानां प्रागुवदेव बिम्बप्रतिबिम्बभावेनाभेदप्रतिपत्तिः।

अत्रेति। 'कलिन्दजा—' इत्यत्रेत्यर्थः। वादिनामिति। नैयायिकानामित्यर्थः। मते इति शेषः। अस्य 'धर्म उत्प्रेक्ष्यते' इत्यत्रान्वयः। विषयेषु इति। आरोपाधारेषु इत्यर्थः। उपमेयेष्विति यावत्। शानजर्थमाह—कर्मेति। तदभिन्नत्वेनोत्प्रेक्षितेत्यर्थः। अत्र 'अत्रोत्प्रेक्षितेत्यधिकम्। तयोरभेदस्य स्वारसिकत्वात्' इति नागेशः। वस्तुतस्तु 'शशिकिशोरा न वास्तविका अपि तु काल्पनिकाः' इति बोधनाय तदावश्यकमेवेति बोध्यम्। तत्रेति। तयोरुत्प्रेक्षयोर्मध्य इत्यर्थः। पूर्वामाह—तादात्म्येति। तादात्म्येनोत्प्रेक्षण इत्यर्थः। वस्तुतस्त्वसमस्त एव पाठो युक्तः। द्वितीयामाह—सम्बन्धेति। विषयेति। बकेत्यर्थः। तत्कृतचमत्काराभावादाह-अनुवाद्येति। उत्प्रेक्ष्यत इति। बकेष्विति शेषः। नन्वेवमपि साधारणधर्माभावात्कथं प्रधानोत्प्रेक्षानिर्वाहोऽत आह—तत्रेति। तस्मिन्सतीत्यर्थः। मूलोत्प्रेक्षेति। मूलोत्प्रेक्षाया विषयी यः शशिकिशोर इत्याद्यर्थः। क्रियोत्प्रेक्षोपपादकत्वात्तस्या मूलोत्प्रेक्षात्वम्। सिद्ध इति। बकानामित्यादिः। मुख्योत्प्रेक्षेति। क्रियोत्प्रेक्षेत्यर्थः। प्रकारान्तरेणापि साधारण्यं धर्मस्याह—क्रोशनेति। एवञ्च नैयायिकमते पर्यवसितबोधाकारमाह-तेनेति। किशोरोभयाभिन्ना इति। सन्त इति शेषः। अत्र "-'शशिकिशोरोभयानुकूलक्रोशेति' इति पाठधारणं कृत्वा 'निगीर्यमाणाभिन्नशशिकिशोराभिन्नाः क्रोशनक्रियानुकूल—' इति युक्तः पाठः।" इति नागेशः। वस्तुतस्तु न नागेशधृतपाठ उपलभ्यते, 'ध्वान्तनिगीर्यमाणशशिकिशोरोभयाभिन्नाः' इत्याकारकपाठस्यैवोपलब्धेः। उपलब्धपाठोऽपि 'निगीर्यमाणाभिन्नाः शशिकिशोराभिन्नाश्च' इति तात्पर्यानुसारं युक्त एव प्रतिभाति। अयं भावः—'कलिन्दजा—' इत्यत्र प्रथमं तमःकर्तृकद्वेषहेतुकनिगरणकर्माभिन्नकल्पितशशिशिशुतादात्म्यं बकेषु उत्प्रेक्ष्यते, ततः तादृशशशिशिशुतादात्म्यापन्नबकरूपे विषये क्रोशनकर्तृत्वात्मकधर्म उत्प्रेक्ष्यते। तत्र पूर्वा धर्म्युत्प्रेक्षा, तादात्म्यसम्बन्धमूलकत्वात्, द्वितीया च धर्मोत्प्रेक्षा समवायात्मकतादात्म्येतरसम्बन्धमूलकत्वात्। ननु धर्मोत्प्रेक्षानिमित्ततयाऽङ्गीकृत उत्प्रेक्ष्यमाणधर्मसमानाधिकरणो विषयगतो धर्मः प्रकृते क इति चेत्? निगरणकर्मत्वमिति मन्तव्यम्। अथ कथं निगरणकर्मत्वस्य बकात्मकविषयगतत्वमिति चेत्? अनुक्तश्वेततानिमित्तकशशिशिशुतादात्म्यस्य बकेषूत्प्रेक्षणे प्राक्कृते बक-शशिकिशोराणामभेदेन शशिकिशोराणां ध्वान्तनिगरणकर्मत्वे बकेष्वपि तत्सिद्धेः। इयं तादात्म्योत्प्रेक्षा अनुवाद्या अचमत्कारिणीत्यन्यदेतत्। एवञ्च यथा 'कोमलातपशोणाभ्र—' इत्यादिविशिष्टोपमास्थले उपमानविशेषणोपमेयविशेषणयोरुपमानविशेषणविशेषणोपमेयविशेषणविशेषणयोश्च शाब्दौपम्यविरहेऽपि आर्थमौपम्यं भवति तथाऽत्रापि बकविशेषणशशिकिशोरविशेषणयोरर्धमज्जननिगरणयोरेवम् बकविशेषणविशेषण-शशिकिशोरविशेषणविशेषणयोः यमुनाजलध्वान्तयोश्चार्थोऽभेदः सम्पद्यते। एतेन मुख्योत्प्रेक्षानिर्वाहक एकविधः साधारणो धर्म उक्तो भवति। अपरविधोऽपि स सम्भवति। यथा—विषयविशेषणस्य शब्दनस्य विषयिविशेषणस्य क्रोशनस्य च बिम्बप्रतिबिम्बभावापन्नतयाऽभेदेन साधारण्यम्। इत्थञ्च 'यमुनाजलार्धमग्नाभिन्नास्तथा कृतभूरिशब्दाभिन्नाश्च बकाः ध्वान्तनिगीर्यमाणाभिन्नाः शशिकिशोराभिन्नाश्च सन्तः क्रोशनक्रियानुकूलव्यापारवन्त इव' इति बोधः पर्यवस्यति इति। वैयाकरणमतानुसार्युपपादनमाह—आख्याते इति। तिङन्ते इति तदर्थः। भावेति। क्रियेत्यर्थः। 'भावप्रधानमाख्यातम्' इति नियममूलकं भावप्राधान्यमाख्याते बोध्यम्। नन्वभेदेन बकेषु क्रियोत्प्रेक्षा बाधिता अत आह—तत्रेति। उत्प्रेक्ष्यमाणक्रोशनक्रियायामित्यर्थः। अस्य 'शब्दनं विषयतया अवतिष्ठते' इत्यत्रान्वयः, वृत्ते बोधे।

अध्यवसानेति । अध्यवसानं च मञ्चाः क्रोशन्तीत्यादिवद्विषयिवाचकशब्देनेति बोध्यम् । तादृशेति । विशेषणद्वयविशिष्टेत्यर्थः । एवमग्रेऽपि । तादृशेति । एकविशेषणविशिष्टेत्यर्थः । क्रियायामिति । क्रोशनेत्यादिः । एवं चेति । एवं सतीति भावः । प्रागुक्तवदिति । उक्तनैयायिकमतसिद्धव्याख्यान इवेति भावः । अयमाशयः—तिङन्ते क्रियाप्राधान्यवादिनां वैयाकरणानां मते प्रकृते शब्दनक्रियायां क्रोशनक्रियाया अभेदेनोत्प्रेक्षा भवति, अतो धर्म्युत्प्रेक्षैवेयं तन्मतेन । ननु शब्दनं नात्र पृथङ्निर्दिष्टम्, अपि तु विशेषणमध्यगततयेति कथं तस्य विषयत्वमिति चेत्? सत्यम्, मञ्चाः क्रोशन्तीत्यत्र मञ्चेषु विषयिषु यथा मञ्चस्थानामभेदाध्यवसानम् तथा शब्दकर्तृषु बकेषु शब्दनस्याध्यवसानात् तस्य विषयत्वं बोध्यम् । अयं विषयविषयिभावः आर्थः । शाब्दे तु बोधे विशेषणविशिष्टा बकाः क्रोशनेऽनुयन्ति, बकेषु च सविशेषणाः शशिकिशोराः अभेदेन । शशिकिशोराणां साक्षात्क्रियान्वये बका अनन्विता एव भवेयुः । एवञ्च 'ध्वान्तकर्तृकवैरहेतुकनिगरणकर्माभिन्ना ये शशिकिशोरास्तदभिन्ना अथ च यमुनाजलार्धमग्नकृतभूरिशब्दाभिन्नाश्च ये बकास्तत्कर्तृका-क्रोशनक्रिया' इति बोधः । अस्मिन्नपि मते विषयविषयिविशेषणानां बिम्बप्रतिबिम्बभावमूलकोऽभेदः पूर्ववदेवावगन्तव्य इति ।

शाब्दबोधसहित उदाहरणतोपयोगी उपपादन किया जाता है—अत्र इत्यादि । जो लोग ( नैयायिक ) शाब्दबोध में प्रथमान्त पद के अर्थ को प्रधान बनाते हैं उनके मत से 'कलिन्दजा—' इस पद्य में अभेदसम्बन्ध द्वारा विशेषण बने हुए 'यमुना के जल में आधे डूबे' और 'कोलाहल करनेवाले' इन दो अर्थों से युक्त बकरूप विषयों ( आधारों ) में 'क्रोशनकर्तृत्व—अर्थात् चिल्लाना क्रिया के कर्ता होने' रूप धर्म की उत्प्रेक्षा होती है । पर इस उत्प्रेक्षा से पहले उन्हीं बकों में उन 'चन्द्रमा के बच्चों के तादात्म्य' की उत्प्रेक्षा होती है जो कल्पित हैं और अन्धकाररूप कर्ता से वैर के कारण की जानेवाली निगरण-( निगलना )क्रिया के कर्म हैं। सारांश यह कि इस पद्य में दो उत्प्रेक्षाएँ हैं—एक 'बकों में चन्द्रकिशोरों' की, दूसरी 'चन्द्रकिशोरों से अभिन्न बकों में क्रोशनकर्तृत्व' की । अब यह नियम है कि जहाँ अभेदसम्बन्ध द्वारा किसी पदार्थ में किसी पदार्थ की उत्प्रेक्षा होती हो वहाँ उस उत्प्रेक्षा को धर्म्युत्प्रेक्षा कहते हैं, जैसे उक्त दोनों उत्प्रेक्षाओं में प्रथम उत्प्रेक्षा, और ऐसी उत्प्रेक्षा का निमित्त होता है विषय तथा विषयी दोनों में रहनेवाला साधारणधर्म, और जहाँ अभेद के अतिरिक्त समवाय आदि किसी अन्य सम्बन्ध द्वारा किसी पदार्थ में किसी पदार्थ की उत्प्रेक्षा होती हो वहाँ उस उत्प्रेक्षा को धर्मोत्प्रेक्षा कहते हैं, जैसे—उक्त उत्प्रेक्षाओं में द्वितीय उत्प्रेक्षा, और ऐसी उत्प्रेक्षा का निमित्त होता है उत्प्रेक्षित होनेवाले धर्म के साथ रहनेवाला वैसा धर्म जो विषय में भी रहता हो । ऐसी स्थिति में, प्रकृत पद्य में क्रोशनकर्तृत्वरूप धर्म की समवायसम्बन्ध-मूलक उत्प्रेक्षा में निमित्त बनाना पड़ेगा उस क्रोशनकर्तृत्व के साथ शशिकिशोरों में रहनेवाले निगरणकर्मत्व-अर्थात् निगलना क्रिया का कर्म होने-को। पर यह धर्म तब तक निमित्त हो नहीं सकता जब तक विषय (बकों) में भी उसकी स्थिति सिद्ध नहीं हो जाय । अतः अनुवाद्य (गौण) रूप में बकों में चन्द्रमा के बच्चों की तादात्म्यसम्बन्ध द्वारा उत्प्रेक्षा की जाती है । इस द्वितीय धर्म्युत्प्रेक्षा का निमित्तभूत धर्म है अनुक्त 'श्वेतता' अर्थात् श्वेत होने के कारण बकों को चन्द्रमा के बच्चों से अभिन्न मान लिया गया है । अब जैसे विशिष्टोपमा में उपमान-उपमेय के विशेषणों तथा उन विशेषणों के विशेषणों का शब्दतः न होने पर भी अर्थतः परस्पर सादृश्य मान लिया जाता है, उसी तरह यहाँ भी बकरूप विषय के विशेषण 'आधे डूबने' और उसके विशेषण 'यमुना-जल' का, मूलभूत-अर्थात् प्रधानोत्प्रेक्षा की सम्पादिका उत्प्रेक्षा के विषयी 'चन्द्रमा के बच्चों' के विशेषण 'निगरण' और उसके विशेषण 'अन्धकार' के साथ अर्थतः अभेद माना जाता

है। तात्पर्य यह कि 'आधे डूबने' को 'निगरण' से और 'यमुनाजल' को 'अन्धकार' से अभिन्न मान लिया जाता है। इस तरह बकों का अन्धकार द्वारा निगरण जब सिद्ध हो जाता है-अर्थात् चन्द्रमा के बच्चों का अन्धकार द्वारा निगरण जब सिद्ध है तब उनसे अभिन्न बकों का भी वह सिद्ध हो जाता है—तब मुख्य उत्प्रेक्षा-अर्थात् बकरूप विषय में क्रोशनकर्तृत्व की उत्प्रेक्षा का निर्वाह हो जाता है। यहाँ क्रोशन (चिल्लाने) और शब्दन (कोलाहल करने) का भी बिम्बप्रतिबिम्बभाव के कारण अभेद है, फलतः ये दोनों पदार्थ भी एक होकर साधारणधर्म के कर्तव्य पूर्ण कर सकते हैं—यह बात भी ध्यान में रखने योग्य है। उक्त रीति के अनुसार नैयायिकों के मत में प्रकृत पद्य का "यमुना-जल में आधे डूबे और अत्यधिक शब्द करते इन दोनों से अभिन्न बगुले, अन्धकार से निगले जा रहे और चन्द्रमा के बच्चे—इन दोनों से अभिन्न होकर 'क्रोशन'रूप क्रिया के अनुकूल चेष्टा से युक्त हैं।" यह शाब्दबोध होता है। यह तो हुई शाब्दबोध में प्रथमान्त पद के अर्थ को मुख्य विशेष्य माननेवाले नैयायिकों की बात। अब जो लोग 'तिङन्त'पदयुक्त वाक्यार्थ के बोध में क्रिया को प्रधान मानते हैं उन वैयाकरणों के मत की बात सुनिये। उनके विचार से यहाँ अभेदसम्बन्ध से 'क्रोशन'(चिल्लाने)-क्रिया की उत्प्रेक्षा होती है। इस उत्प्रेक्षा में विषय बगुले नहीं हो सकते, क्योंकि द्रव्य में क्रिया का अभेद बाधित है, अतः शब्दन (कोलाहल करने) को ही आक्रोशनक्रियोत्प्रेक्षा का विषय समझना चाहिए। यद्यपि शब्दन पृथक् निर्दिष्ट नहीं है, उसकी प्रतीति शाब्दबोध में बक के विशेषणरूप में होती है, अतः वह विषय नहीं हो सकता, तथापि अध्यवसान के बल से वह (शब्दन) विषय होता है-अर्थात् जिस तरह 'मञ्चाः क्रोशन्ति' में मञ्चस्थ जनों का मञ्चरूप विषयी के साथ अभेदाध्यवसान होता है उसी तरह यहाँ भी शब्द करनेवाले बकों में ही शब्दन का अध्यवसान (आरोप) करके उक्त उत्प्रेक्षा की सिद्धि की जाती है। फलतः यह उत्प्रेक्षा आर्थ (अर्थतः ज्ञात होनेवाली) है। शाब्दबोध में तो उक्त विशेषणों से युक्त बगुले 'क्रोशन'क्रिया में विशेषण बनते हैं और वैसे बगुलों में उक्त विशेषणयुक्त शशिकिशोर विशेषण होते हैं। इस शाब्दबोध में शशिकिशोर ही साक्षात् क्रिया में विशेषणरूप से अन्वित नहीं हो सकते, अपितु उक्त रीति से बगुले के विशेषण बनकर ही परम्परया अन्वित हो सकते हैं, क्योंकि यदि साक्षात् शशिकिशोर का ही अन्वय क्रिया के साथ कर दिया जाय तब बगुले अनन्वित ही रह जायेंगे। फलतः वैयाकरणों के मत से प्रकृत पद्य का शाब्दबोध "अन्धकार से निगले जा रहे शशिकिशोरों से अभिन्न तथा यमुना-जल में आधे डूबे और कोलाहल करते-इन दोनों से भी अभिन्न बगुले जिसके कर्ता हैं, वह 'क्रोशन'" यह होता है। आर्थबोध के अनुसार यहाँ क्रियास्वरूपोत्प्रेक्षा मानी जाती है। विषय और विषयी के विशेषणों का, इस मत में भी, पूर्व मत के अनुसार ही बिम्बप्रतिबिम्बभाव माना जाता है।

क्रियास्वरूपोत्प्रेक्षाया एवोदाहरणान्तरमुपदर्शयितुमाह—

तथा—

इसी तरह—

उदाहरणमुपन्यस्यति—

'राज्याभिषेकमाज्ञाय शम्बरासुरवैरिणः।
सुधाभिर्जगतीमध्यं लिम्पतीव सुधाकरः॥'

कविश्चन्द्रज्योत्स्नां वर्णयति—सुधाकरश्चन्द्रः, शम्बरासुरवैरिणः कामदेवस्य, राज्याभिषेकं राजत्वसूचकविधिविशेषम्, आज्ञाय विदित्वा, जगतीमध्यं धरातलान्तरालम्, सुधाभिः पीयूषैरथ च चूर्णैः, लिम्पति इवेत्यर्थः।

उदाहरण दिखलाया जाता है—राज्याभिषेक इत्यादि। कवि चन्द्रिका का वर्णन

करता है—चन्द्रमा, कामदेव का राज्याभिषेक समझकर, मानो, सुधा ( अमृत-चूने ) से पृथिवी के मध्यभाग को पोत रहा है।

उपपादयति—

अत्रापि चन्द्रे विषये तादृशलेपनकर्तृत्वरूपधर्मोत्प्रेक्षेत्येकं दर्शनम्। किरणव्यापने विषये चन्द्रकर्तृकसुधाकरणकलेपनस्य तादात्म्येनोत्प्रेक्षणमिति द्वितीयम्। तत्र प्रथमे मते धवलीकारकत्वरूपनिमित्तानुपादानादनुपात्तनिमित्ता, विषयस्योपादानादुपात्तविषया। द्वितीयेऽपि तस्यैव निमित्तस्यानुपादानादनुपात्तनिमित्ता, विषयस्य निगीर्णतयानुपात्तविषयेति विशेषः।

अत्रापीति। 'राज्याभिषेक' इति पद्येऽपीत्यर्थः। तादृशेति। सुधाकरणकजगन्मध्यकर्मकेत्यर्थः। चन्द्रकर्तृकेति। चन्द्राभिन्नकर्तृकेत्यर्थः। करणकेति। जगन्मध्यकर्मकेत्यपि बोध्यम्। विषयस्य चन्द्रस्य। तस्यैव धवलीकारकत्वस्यैव। विषयस्य किरणव्यापनस्य। निगीर्णेति। सुधाभिर्लिम्पतीत्यनेनेति भावः। 'राज्याभिषेके—' इति पद्येऽपि पूर्ववत् चन्द्रात्मके विषये तादृशलेपनकर्तृत्वमुत्प्रेक्ष्यत इति प्रथमान्तार्थविशेष्यकबोधवादिनो नैयायिकाः इति तन्मतेनात्र धर्मोत्प्रेक्षा। सा च धवलीकारकत्वरूपोत्प्रेक्ष्यमाणधर्मसमानाधिकरणधर्मात्मकनिमित्तस्यानुक्ततयाऽनुक्तनिमित्ता, चन्द्रात्मकविषयस्योक्ततयोक्तविषया। किरणव्यापनात्मके विषये तादृशलेपनस्याभेदेनोत्प्रेक्षेति च व्यापारमुख्यविशेष्यकबोधवादिनो वैयाकरणाः इति तन्मतेनेयं धर्म्युत्प्रेक्षा। सा च धवलीकारकत्वरूपसाधारणधर्मात्मकनिमित्तानुपादानादनुपात्तनिमित्ता किरणव्यापनात्मकविषयानुल्लेखादनुपात्तविषया च। वैयाकरणानां मतमनुसृत्यैव क्रियास्वरूपोत्प्रेक्षात्वमनयोः पद्ययोरिति भावः।

उपपादन किया जाता है—अत्रापि इत्यादि। 'राज्याभिषेक—' इस पद्य में भी चन्द्र में लेपनकर्तृत्व की उत्प्रेक्षा है यह एक सिद्धान्त है नैयायिकों का। इस मत के अनुसार समवायसम्बन्धमूलक यह धर्मोत्प्रेक्षा हुई। यहाँ धवलीकारकत्व ( श्वेत बनाना ) रूप निमित्त ( समानाधिकरण धर्म ) उक्त नहीं है और चन्द्ररूप विषय उक्त है, अतः यह उत्प्रेक्षा अनुक्तनिमित्ता तथा उक्तविषया कहलायगी। किरणव्यापन(किरणों का फैलना)-रूप विषय में लेपनक्रिया की तादात्म्यसम्बन्ध से उत्प्रेक्षा है यह दूसरा सिद्धान्त है वैयाकरणों का। इस मत के अनुसार तादात्म्यसंबन्धमूलक यह धर्म्युत्प्रेक्षा हुई। यहाँ धवलीकारकत्वरूप निमित्त ( साधारणधर्म ) उक्त नहीं है और किरणव्यापनरूप विषय भी सुधालेपन द्वारा निगीर्ण ही है—अनुक्त ही है, अतः यह उत्प्रेक्षा अनुक्तनिमित्ता तथा अनुक्तविषया कहलायगी। यही दोनों मतों में अन्तर है। उक्त दोनों पद्य वैयाकरणों के मत के अनुसार ही क्रियास्वरूपोत्प्रेक्षा के उदाहरण होते हैं यह समझना चाहिए।

भेदान्तरमुदाहर्तुमाह—

तादात्म्येन द्रव्यस्वरूपोत्प्रेक्षा यथा—

अभेदसम्बन्ध द्वारा द्रव्यस्वरूप की उत्प्रेक्षा, जैसे—

उदाहरणमुपन्यस्यति—

'कलिन्दशैलादियमाप्रयागं केनापि दीर्घा परिखा निखाता।
मन्ये तलस्पर्शविहीनमस्यामाकाशमानीलमिदं विभाति॥'

कविः यमुनां वर्णयति–कलिन्दशैलात् कलिन्दाख्यपर्वतात्, आरभ्य, आप्रयागं प्रयागपर्यन्तम्, केनापि अज्ञातनामधेयेन जनेन, इयम्, दीर्घा बहुदूरव्यापिनी, परिखा गर्तविशेषः, निखाता रचिता। अस्यां परिखायाम्, तलस्पर्शविहीनं अतलस्पर्शि, आनीलम् ईषन्नीलवर्णम्, इदं प्रत्यक्षदृश्यम्, आकाशं गर्तगतं गगनम्, विभाति शोभते इति मन्ये इत्यर्थः।

उदाहरण का निर्देश किया जाता है—कलिन्द इत्यादि। कवि यमुना-वर्णन-प्रसङ्ग में कहता है—कलिन्द पर्वत से लेकर प्रयागपर्यन्त, किसी ने, यह लम्बी खाई खोद डाली है। मानो, इसमें अगाध होने के कारण, नीचे हिस्से के स्पर्श से रहित यह यमुनाजल के रूप में गहरा नीला आकाश शोभित हो रहा है।

उपपादयति—

अत्र यमुनायां नीलत्वदीर्घत्वनिमित्तकमाकाशतादात्म्योत्प्रेक्षणम्। आकाशस्य स्वरूपात्मकत्वाद्द्रव्यस्वरूपोत्प्रेक्षेयम्। अत एवाकाशपदाच्छब्दाश्रयत्वाद्यनुपस्थितिदशायामप्याकाशधीः। नीलत्वरूपनिमित्तस्य विषयिणि सिद्ध्यर्थं तृतीयचरणोपादानम्। दीर्घत्वरूपनिमित्तसिद्ध्यर्थं च पूर्वार्धम्।

अत्रेति। 'कलिन्द—' इति श्लोक इत्यर्थः। ननु प्रागवज्जात्युत्प्रेक्षेयं कुतो न, अत आह—आकाशेति। नन्वाकाशत्वं शब्दाश्रयत्वादिरूपमिति कुतः स्वरूपात्मकमत आह—अत एवेति। तस्य स्वरूपात्मकत्वादेवेत्यर्थः। आदिना शब्दसमवायिकारणत्वपरिग्रहः। विषयिणि आकाशे। तृतीयेति। तलस्पर्शेत्यादीत्यर्थः। अत्र 'तलस्पर्शे सति प्रतिबिम्बासम्भव इति भावः।' इति नागेशः। वस्तुतस्तु प्रतिबिम्बस्यात्र न कश्चन प्रसङ्गः। 'उपरितनमाकाशं गर्ते प्रतिबिम्बितं सत् विभाति' इति ग्रन्थाशयं प्रायो नागेशो वेत्ति। अहं तु मन्ये, नासौ ग्रन्थाशयः, अपि तु गर्तगते जलेऽतलस्पर्शिजलशून्यगर्तगतगगनसम्भावनात्र ग्रन्थकृतोऽभिप्रेता। तत्र यथोपरितने महाकाशे वस्तुतोऽवर्तमानमपि नैल्यम् अपारत्वादाकाशस्य प्रतिभाति तथा गर्तगते आकाशेऽपि तलस्पर्शराहित्यहेतुको नैल्यविभ्रमः। तलस्पर्शे तु गर्तस्य घटावच्छिन्न आकाश इव न तद्गतेऽप्याकाशे नैल्यं प्रतिभायात्। इति। सिद्ध्यर्थं चेति। आकाश एवेति शेषः। अत्रापि 'गर्तोपरितनस्याकाशस्य तद्दीर्घत्वारोपादिति भावः।' इति नागेशोक्तिर्मदुक्तग्रन्थाशयाज्ञानमूलिकैव। उपरितने प्रसिद्धे महाकाशे नीलत्वं दीर्घत्वञ्च प्रसिद्धमिति तद्द्वयं कलिन्दपर्वतारब्धप्रयागावधिकखातगतजलरूपे विषयेऽपि वर्तमानं साधारणधर्मात्मकतया निमित्तीभवत् आकाशरूपद्रव्यस्वरूपोत्प्रेक्षां जनयति। ननु आकाशत्वं शब्दाश्रयत्वं शब्दसमवायिकारणत्वं वेति नैयायिकाः, तथा च नाकाशत्वमाकाशात्मकमिति कुतोऽत्र द्रव्यस्वरूपोत्प्रेक्षात्वम् इति चेन्न, नैयायिकमतस्य विचारासहत्वात्, तथाहि—यदि शब्दाश्रयत्वादिकमाकाशत्वं स्यात् तर्हि शब्दाश्रयत्वादिरूपार्थस्मरणदशायामेवाकाशपदादाकाशबोधो भवेत्, न चैवं दृश्यते, दृश्यते तु तादृशार्थस्मरणाभावदशायामपि आकाशपदादाकाशबोधो भवतीति स्वरूपात्मकमेवाकाशत्वम्, अतो द्रव्यस्वरूपोत्प्रेक्षात्वं सुस्थम् इति। अन्यत् पदकृत्यप्रसङ्ग एव स्फुटीकृतम्।

उपपादन किया जाता है—अत्र इत्यादि। 'कलिन्द—' इस पद्य में 'नीलेपन' और 'लम्बेपन' को निमित्त बनाकर यमुना में आकाश के अभेद की उत्प्रेक्षा की गई है। तात्पर्य यह कि जैसे यह प्रसिद्ध महाकाश नीला और लम्बा है वैसे यमुना (खाते का जलभाग) भी नीली और लम्बी है, अतः 'नीलत्व' तथा 'दीर्घत्व' इन दो साधारणधर्म के कारण, कवि, यमुनारूप विषय में आकाशरूप विषयी की, अभेदसम्बन्ध से सम्भावना करता है। आकाश एक है, अतः आकाशत्व आकाशरूप ही पदार्थ है, जातिरूप नहीं, कारण, अनेक में रहनेवाला धर्म ही जातिरूप हो सकता है, एक में रहनेवाला नहीं। फलतः आकाशस्वरूप आकाशत्व द्रव्यरूप होता है, अतः इस पद्य में 'द्रव्योत्प्रेक्षा' हुई। आप कहेंगे—नैयायिक लोग आकाशत्व को 'शब्दाश्रयत्व' अथवा 'शब्दसमवायिकारणत्व'रूप मानते हैं, ऐसी स्थिति में आकाशत्व आकाशस्वरूप हुआ

नहीं, फिर कैसे यहाँ द्रव्योत्प्रेक्षा मानी जा सकती है ? तो इसके उत्तर में हम कहेंगे कि नैयायिकों की उक्त मान्यता अनुभव-विरुद्ध है। कारण, यदि आकाशत्व शब्दाश्रयत्व आदिरूप होता तो 'शब्द का आश्रय है आकाश' इस अर्थ के स्मरण होने पर ही आकाश पद से अर्थबोध होता, पर ऐसा होता नहीं–होता तो यह है कि जो लोग 'शब्द का आश्रय आकाश है' ऐसा नहीं भी जानते रहते हैं उन्हें भी आकाश पद से आकाश का बोध होता है, अतः आकाशत्व आकाशरूप ही है, और कुछ नहीं, फलतः यहाँ द्रव्योत्प्रेक्षा सर्वथा उचित है। आकाश में 'नीलेपन'रूप निमित्तभूत धर्म को सिद्ध करने के लिये इस पद्य का तीसरा चरण ('नीचे के हिस्से के स्पर्श से रहित' यह विशेषण ) रचा गया है। तात्पर्य यह कि–जैसे यह महाकाश इसलिये नीला प्रतीत होता है कि उसका कहीं आर-पार नहीं है—निरवधि है–सर्वथा शून्य है–ऊपर कहीं कोई आवरक नहीं है, उसी तरह इस लम्बी खाई के अन्दर का आकाश भी निरवधि है–सर्वथा शून्य है, क्योंकि खाई की तलहटी टूट चुकी है, अतः इस आकाश में भी 'नीलेपन' की प्रतीति होती है। यहाँ नागेश अपनी टीका में लिखते हैं कि–'तलस्पर्शे सति प्रतिबिम्बासम्भवः–अर्थात् अतलस्पर्शी न होने पर ऊपर के आकाश की तद्गत नीलत्व की परछाईं नहीं हो सकती।' पर मेरे विचार से यह विवरण सङ्गत नहीं है। कारण, प्रतिबिम्ब का यहाँ कोई प्रसङ्ग ही नहीं आता। प्रायः नागेशमहोदय यहाँ खाई में प्रतिबिम्बित उपरितन महाकाश की सम्भावना जल में समझते हैं। पर वस्तुतः बात यह है नहीं, अपितु यह है कि–यदि कलिन्द पर्वत से प्रयाग पर्यन्त एक अतलस्पर्शिनी खाई खोद दी जाय और उसमें जल नहीं हो, तब उस खाई के अन्दर का आकाश लम्बा और नीचे की ओर निरवधि होने के कारण ऊपर के महाकाश के समान ही नीला दीख पड़ेगा, बस, उसी स्थिति की संभावना यहाँ नीले जल में की गई है। और इस पद्य के पूर्वार्ध की रचना आकाश में 'लम्बेपन'रूप निमित्तभूत धर्म की सिद्धि के लिये की गई है–अर्थात् इतनी लम्बी खाई का खोदना वर्णित हुआ है, क्योंकि खन्दक के अनुसार ही उसके अन्दर का आकाश होता है। यहाँ भी नागेशजी ने 'गर्तोपरितनाकाशस्य तद्दीर्घत्वारोपात्' लिखकर उसी प्रतिबिम्बवाली भूल को दुहराया है।

भेदान्तरमुदाहर्तुमाह—

जात्यादीनामभावोत्प्रेक्षा यथा—

जातेर्गुणस्य च योऽभावः ( अत्यन्ताभावो ध्वंसो वा ) तस्याभेदेन सम्भावना यथेति भावः।

जाति आदि के अभावों की उत्प्रेक्षा, जैसे—

उदाहरणमुपन्यस्यति—

'बाहुजानां समस्तानामभाव इव मूर्तिमान्।
जयत्यतिबलो लोके जामदग्न्यः प्रतापवान्॥'

समस्तानां सर्वेषाम्, बाहुजानां क्षत्रियाणाम्, मूर्तिमान् सविग्रहः, अभावः अत्यन्ताभावः, इव, प्रतापवान् पराक्रमविशेषविशिष्टः, अतिबलः परमबलशाली, जामदग्न्यः परशुरामः, लोके, जयति सर्वोत्कर्षेण वर्तत इत्यर्थः।

उदाहरण का निर्देश किया जाता है—बाहुजानाम् इत्यादि। समस्त क्षत्रियों का, मानो मूर्तिमान् अभाव हो ऐसे परमप्रतापशाली अत्यधिक बलवाले परशुराम, संसार में, सर्वोत्कृष्ट हैं।

उपपादयति—

अत्र जात्यवच्छिन्नाभावो विरोधित्वनिमित्तेन तादात्म्येनोत्प्रेक्ष्यते।

जातीति । जातिः क्षत्रियत्वम्, तदवच्छिन्नानाम् अभाव इत्यर्थः । समग्रक्षत्रियाभाव इति यावत् । विरोधित्वेति । जात्यवच्छिन्नेत्यादि । जामदग्न्यः क्षत्रियत्वजातिमतां विरोधी । ततश्च विरोधित्वनिमित्तेन जामदग्न्ये द्रव्ये क्षत्रियत्वजातेरभावस्तादात्म्येन सम्भाव्यत इति जात्यभावधर्म्युत्प्रेक्षा सेयमिति भावः ।

उपपादन किया जाता है—अत्र इत्यादि । 'बाहुजानाम्—' इस पद्य में क्षत्रियत्व जाति से अवच्छिन्न के अभाव ( अत्यन्ताभाव ) की, क्षत्रियत्व जाति के विरोधी होने को निमित्त मानकर, उत्प्रेक्षा की जाती है ।

पाठभेदेन भेदान्तरतामापादिते प्रकृतपद्ये विशेषमुपपादयति—

**विनाश इवेत्युक्तौ तु ध्वंसः । 'समस्तलोकदुःखानाम्' इति प्रथमचरणे कृते गुणाभावः ।**

यदि प्रकृतपद्यघटकाभावपदस्थाने 'विनाश'-पदं स्थापयित्वा पद्यं रचितमभविष्यत्तदा क्षत्रियत्वजात्यवच्छिन्नध्वंसोत्प्रेक्षा समपत्स्यत । यदि तु समग्रप्रथमचरणस्थाने 'समस्त-लोकदुःखानाम्' इत्यपठिष्यत्, तदा गुणाभावोत्प्रेक्षाऽभविष्यत्, दुःखानां गुणत्वादिति भावः ।

यदि इसी पद्य में 'अभाव इव' के स्थान पर 'विनाश इव' पाठ मान लिया जाय तब यही पद्य 'ध्वंसाभाव' की उत्प्रेक्षा का उदाहरण हो जायगा । और यदि इसी पद्य का प्रथम चरण 'समस्तलोकदुःखानाम्—सब लोगों के दुःख के' इस प्रकार बना दिया जाय तो यही पद्य गुणाभाव की उत्प्रेक्षा का उदाहरण हो जायगा, क्योंकि 'दुःख' गुण है ।

क्रियाभावोत्प्रेक्षोदाहरणमाह—

**'द्यौरञ्जनकालीभिर्जलदालीभिस्तथा वव्रे ।**
**जगदखिलमपि यथासीन्निर्लोचनवर्गसर्गमिव ।।'**

द्यौः आकाशः, अञ्जनकालीभिः कज्जलवच्छ्यामाभिः, जलदालीभिः मेघपङ्क्तिभिः, तथा तेन प्रकारेण, वव्रे आच्छादिता, यथा, अखिलम् सकलम्, अपि, जगत् संसारः, निर्लोचनाः नेत्रशून्याः, ये जनाः, तेषां, वर्गः समूहः, तस्य, सर्गः सृष्टिः, इव, आसीत् अभूदित्यर्थः ।

क्रिया के अभाव की उत्प्रेक्षा का उदाहरण उपस्थित किया जाता है—द्यौरित्यादि । आकाश, काजल-सी काली मेघ-पङ्क्तियों से ऐसे घिर गया, मानो सारा संसार नेत्रहीन जनों की सृष्टि हो गया । तात्पर्य यह कि घन-घटा के कारण सब लोग अंधे हो गए, कोई किसी को दिखाई नहीं पड़ता था ।

उपपादयति—

**अत्रापि चाक्षुषज्ञानशून्यत्वेन निमित्तेन पार्यन्तिकः क्रियाभावो धर्मः ।**

निमित्तेनेति । अनुपात्तेनेति भावः । पार्यन्तिक इति । अत्र नागेशः 'यद्यपि सर्गमिति नपुंसकोक्त्या तत्किं जगदन्तरमिवैतज्जगदिति पूर्वं बोधः, तथापि तादृशजगदन्तराप्रसिद्ध्या अभावोत्प्रेक्षाबाधापत्त्या चात्रैव धर्मिणि जगति लोचनवर्गस्य सर्गो दानं संसर्गः प्रसरणं वा यत्र दर्शने तदभावो निरा बोध्यते इति दर्शनक्रियाभावरूपो धर्म उत्प्रेक्ष्यते पश्चादित्यर्थः । तदाह क्रियाभावो धर्म इति ।' इति ।

उपपादन किया जाता है—'द्यौः–'इस पद्य में 'नेत्रद्वारक ज्ञान से सर्वथारहित होने' को निमित्त मानकर, अन्ततोगत्वा क्रिया ( दर्शन ) के अभावरूप धर्म की उत्प्रेक्षा की जा रही है । अभिप्राय यह है कि–'निर्लोचनवर्गसर्गमिव' का बोध पहले यद्यपि यह होता है कि–लोचनवर्ग का सर्ग (सृष्टि) निर्गत (दूर) हो गया है जिससे ऐसे जगत् के समान ( अखिल

जगत् ), पर वस्तुतः ऐसा जगत् कहीं प्रसिद्ध नहीं है जिसमें आँखों की सृष्टि सर्वथा हो ही नहीं, अतः अन्त में उक्त समस्त पद का अर्थ 'लोचनवर्ग का सर्ग संसर्ग ( संबन्ध ) है जिसमें ऐसी जो दर्शनक्रिया वह निर्गत ( दूर ) हो गई है जिससे ऐसा सारा जगत्' इस तरह से करना पड़ता है, अतएव अन्त में जगत्‌रूप धर्मी में दर्शनक्रियाऽभावरूप धर्म की उत्प्रेक्षा सिद्ध होती है।

अभावोत्प्रेक्षोदाहरणदानप्रसङ्गमुपसंहरन्नाह—

एवं द्रव्याभावोत्प्रेक्षाऽपि स्वयमूह्या।

एवं पूर्वोक्तरीत्यैव। ऊह्या तर्कणीया।

इसी तरह द्रव्याभाव की उत्प्रेक्षा का भी ऊह स्वयं कर लेना चाहिए।

विशेषमाह—

मालारूपाऽप्येषा सम्भवति।

एषा स्वरूपोत्प्रेक्षा।

यह स्वरूपोत्प्रेक्षा मालारूप भी हो सकती है।

उदाहर्तुमाह—

यथा—

जैसे—

उदाहरणमुपन्यस्यति—

'द्विनेत्र इव वासवः करयुगो विवस्वानिव
द्वितीय इव चन्द्रमाः श्रितवपुर्मनोभूरिव।
नराकृतिरिवाम्बुधिर्गुरुरिव क्षमामागतो
नुतो निखिलभूसुरैर्जयति कोऽपि भूमीपतिः॥'

द्विनेत्रः नेत्रद्वयसहितः न तु सहस्रनेत्रः, वासवः इन्द्रः, इव, करयुगः द्विहस्तः द्विकिरणो वा, न तु सहस्ररश्मिः ( करयुगपदे करयुगम् अस्त्यस्येत्यर्श आद्यच्, करयोर्युगं यस्येति व्यधिकरणबहुव्रीहिर्वा ), विवस्वान् सूर्यः, इव, द्वितीयः अपरः, चन्द्रमाः, इव, श्रितवपुः धृतशरीरः, मनोभूः कामः, इव, नराकृतिः मनुष्याकारः, अम्बुधिः समुद्रः, इव, क्षमां भुवम्, आगतः अवतीर्णः, गुरुः बृहस्पतिः, इव, निखिलैः सर्वैः, भूसुरैः ब्राह्मणैः, नुतः अभिनन्दितः, कोऽपि अनिर्वचनीयः भूमीपतिः राजा, जयति सर्वोत्कर्षेण वर्तत इत्यर्थः।

उदाहरण का निर्देश किया जाता है—द्विनेत्र इत्यादि। मानो दो नयन वाला इन्द्र हो, मानो दो कर ( हाथ अथवा किरण ) वाला सूर्य हो, मानो दूसरा चन्द्रमा हो, मानो देहधारी कामदेव हो, मानो मनुष्य के समान आकारवाला समुद्र हो और मानो पृथिवी पर अवतीर्ण बृहस्पति हो ऐसा, सकल ब्राह्मणों से अभिनन्दित कोई-अनिर्वचनीय राजा सर्वोत्कृष्ट है।

शङ्कासमाधानपुरस्सरमुपपादयति—

अत्र राजगतानां द्विनेत्रत्वादीनां वासवादितादात्म्यविरोधिनां विरोधनिवर्तनाय विषयिषु वासवादिष्वारोपेण साधारणीकरणम्। न चात्रोपमा शक्यनिरूपणा, द्विनेत्रत्वादीनामुक्तेर्निष्प्रयोजनकत्वापत्तेः। न चोपमाया निष्पादकं तेषां साधारण्यम्, तदभावेऽपि परमैश्वर्यादिभिः प्रतीयमानैस्तस्या निष्पत्तेः। असुन्दरत्वादुपमानिष्पादकत्वेन कवेरनभिप्रेतत्वाच्च। नह्यत्र द्विनेत्रत्वादिभिर्धर्मैर्वासवादिसादृश्यं राज्ञः कवेरभिप्रायविषयः। एवं द्वितीयत्वादीनां चन्द्रादिष्वा-

रोपोऽप्युपमायां सत्यामनर्थक एव स्यात् । अभेदप्रतिपत्तौ तु सहस्रनेत्रेण सहस्रकरेण विधिसृष्टावेकेन वपुर्विहीनेन जलाकारेण स्वर्गगतेन च तेन तेन कथमस्याभेदः स्यादिति प्रतिकूलधियमपसारयतां विषयिगतानां द्विनेत्रत्वाद्यारोपाणामस्त्येवोपयोगः । अत्रैवेवशब्दस्याभावे दृढारोपं रूपकम् । विषयिगतविशेषणानामभावे उपमा । उभयेषामेकतरस्याप्यभावे शुद्धरूपकमिति विवेकः ।

ननूपमैवात्रास्तु इत्याशङ्कते—न चेति । समाधत्ते—द्विनेत्रत्वादीनामिति । पुनः शङ्कापक्षसमर्थनायोक्तमुत्तरमाक्षिपन्नाशङ्कते—न चेति । समाधत्ते—तदभावेऽपीति । तस्या उपमायाः । तनूपात्तधर्माभाव एव प्रतीयमानधर्मादरोऽत आह—असुन्दरेति । विच्छित्तिविशेषाजनकत्वादित्यर्थः । ननूत्प्रेक्षापत्तेऽपि तदुक्तिवैयर्थ्यमत आह—अभेदेति । करेण किरणेन । तेन तेनेति । वासवादिनेत्यर्थः । अस्य वर्णनीयस्य राज्ञः । उभयाभावस्यैकस्मिन्नपि सत्त्वादाह—एकतरस्येति । प्रत्येकस्येति भावः । 'द्विनेत्र—' इति पद्ये एकत्र राजरूपे विषये वासवादीनां बहूनां विषयिणां तादात्म्यस्य सम्भावनान्मालारूपा द्रव्यस्वरूपोत्प्रेक्षा । तत्र द्विनेत्रत्वादिविशिष्टे विषये सहस्रनेत्रत्वादिविशिष्टानां विषयिणां कथं तादात्म्यम्, द्विनेत्रत्वादिसहस्रनेत्रत्वाद्योर्विरोधित्वादित्याशङ्कापनोदनाय विषयिषु द्विनेत्रत्वादिकमारोप्यते, येन विषयविषयिणोः साम्यं सङ्घटते । उपमाऽत्र नाङ्गीकर्तुं शक्या, विषयिषु द्विनेत्रत्वाद्यारोपस्य निरर्थकत्वापत्तेः । उपमासम्पादकसाधारण्यसम्पादनाय तदावश्यकत्वमपि न वक्तुं योग्यम्, प्रतीयमानपरमैश्वर्यादिकसाधारण्यमादायापि उपमायाः सिद्धेः सम्भवात् । किञ्चात्र द्विनेत्रत्वादिधर्ममूलकं राज्ञि वासवादिसादृश्यं कविविवक्षाविषयीभूतमपि नास्ति, तादृशसादृश्यस्य प्राणिमात्रप्रतियोगिकत्वेनाचमत्कारित्वात् । एवमत्रोपमास्वीकारे चन्द्रमसि द्वितीयत्वारोपोऽपि व्यर्थ एव भवेत्, सदृशस्य द्वितीयत्वध्रौव्यात् । उत्प्रेक्षास्वीकारे तु द्विनेत्रत्वाद्यारोपः सार्थकः, यत उत्प्रेक्षायामभेदप्रतिपत्तिर्भवति, द्विनेत्रत्वादिविशिष्टे राज्ञि वासवादेरभेदस्य प्रतिपत्तौ च वासवादेः सहस्रनेत्रत्वादिकानि बाधकानि भवन्ति, अतः वासवादौ द्विनेत्रत्वाद्यारोपो बाधकसहस्रनेत्रत्वादिबुद्धिनिरासक इति भावः । अस्मिन्नेव पद्ये यदि इवशब्दा न स्युस्तर्हि दृढारोपो रूपकालङ्कारः स्यात्, यदि च इवशब्दा यथावत् भवेयुः विषयिविशेषणानि द्विनेत्रत्वादिकानि न भवेयुस्तदोपमालङ्कारो भवेत्, यदि इवशब्दा विषयिविशेषणानि च न स्युस्तदा शुद्धरूपकालङ्कारो भवेदिति शिष्यबुद्धिवैशद्याय विवेकः कृत इति बोध्यम् ।

शङ्का-समाधानसहित उपपादन किया जाता है—अत्र इत्यादि । 'द्विनेत्र—' इस पद्य में इन्द्र आदि का तादात्म्य राजा में कहना अभीष्ट है, पर यह तादात्म्य स्वभावतः बन नहीं सकता, क्योंकि राजा दो आँखोंवाला, दो करोंवाला, एक चन्द्र से भिन्न, शरीरधारी, मनुष्याकार और पृथ्वीगत है और इन्द्र हैं सहस्राक्ष, सूर्य हैं सहस्ररश्मि, चन्द्र है एक, कामदेव है अशरीरी, समुद्र है जलाकार एवं बृहस्पति हैं स्वर्गवासी, अतः इस विरोध को हटाने के लिये राजारूप विषय में रहनेवाले द्विनेत्रत्व आदि का आरोप इन्द्र आदि में यथायथ कर दिया गया है जिससे वे धर्म साधारण होकर विषय-विषयी की समता को सिद्ध करते हैं । आप कहेंगे—यहाँ उपमा ही क्यों नहीं मान लेते ? हम कहेंगे—यहाँ उपमा का निरूपण नहीं हो सकता । कारण, उपमा मानने पर इन्द्र आदि में द्विनेत्रत्व आदि का आरोप करना व्यर्थ हो जायगा । आप कहेंगे—वह व्यर्थ क्यों होगा ? वह तो उपमा का साधक साधारणधर्मरूप ही है । तो यह ठीक नहीं । कारण, इन आरोपित धर्मों के विना भी अनुक्त, पर प्रतीयमान परम ऐश्वर्य आदि साधारणधर्म को लेकर उपमा सिद्ध हो सकती है । दूसरे, ये धर्म सुन्दर (चमत्कार-

विशेषजनक ) भी नहीं और कवि इन्हें उपमा के साधक मानता भी नहीं—अर्थात् यहाँ द्विनेत्रत्व आदि धर्म के कारण राजा में इन्द्र आदि की तुलना करना कवि को अभिप्रेत नहीं। ऐसा अभिप्राय कवि का हो भी कैसे सकता है? कारण, द्विनेत्रत्व के कारण यदि इन्द्र से तुलना की जाय तब तो सबों की तुलना इन्द्र से हो जाय, क्योंकि सभी द्विनेत्र हैं। इसी तरह 'द्वितीयत्व' का चन्द्र में आरोप भी उपमा मानने पर व्यर्थ हो जायगा, क्योंकि 'चन्द्र जैसा' इतना कहने पर भी उपमा बन सकती है, उसके लिये 'दूसरे चन्द्र जैसा' यह कहना आवश्यक नहीं है। हाँ, अभेद-ज्ञान में इन आरोपित विशेषणों का उपयोग सिद्ध हो सकता है, क्योंकि अभेद-ज्ञान में हमें ये ज्ञान प्रतिबन्धक होते हैं कि-इन्द्र हजार आँखों वाला है, सूर्य सहस्रकर (हजार किरणवाला) है, चन्द्रमा विधाता की सृष्टि में एक है, कामदेव शरीररहित है, समुद्र जलरूप है एवं बृहस्पति स्वर्ग में रहता है, और राजा में ये बातें हैं नहीं, फिर उनके साथ इसका (राजा का) अभेद कैसे हो सकता है? इस प्रतिबन्ध को दूर करने में इन विशेषणों का उपयोग है। अतः यहाँ अभेदप्रधान उत्प्रेक्षा ही है और वह भी मालारूप, क्योंकि एक विषय (राजा) में अनेक विषयी (इन्द्र आदि) के तादात्म्य की सम्भावना की गई है। इसी पद्य में यदि 'इव' पद हटा दिया जाय तो यही पद्य दृढारोपरूपक का, यदि इव शब्द रहे और विषयी (इन्द्रादिक) के विशेषण (द्विनेत्र आदि) हटा दिए जायँ, तो उपमा का और यदि 'इव' पद पूर्वोक्त विषयि-विशेषण दोनों हटा दिए जायँ, तो शुद्धरूपक का उदाहरण हो सकता है। यह विभाग शिष्य-बुद्धि-वैशद्यार्थ दिखला दिया गया है।

उपसंहरति—

**एवं स्वरूपोत्प्रेक्षादिगुपदर्शिता।**

पूर्वोक्ता स्वरूपोत्प्रेक्षाया विविधभेदाया रीतिः प्रकाशिता, अनया रीत्या स्वरूपोत्प्रेक्षायाः अनुक्ता अपि ते ते विशेषाः स्वयमूहनीया इति भावः।

उपसंहार किया जाता है—एवं इत्यादि। इस तरह स्वरूपोत्प्रेक्षा का दिग्दर्शन कराया गया है। तात्पर्य यह है कि इस सम्बन्ध की अन्य बातें स्वयं समझ लीजिए।

अवान्तरभिन्नप्रकरणारम्भं सूचयति--

**अथ हेतूत्प्रेक्षा।**

जात्यादीनां पदार्थानां हेतुत्वेनोत्प्रेक्षाया निरूपणमारभ्यत इति भावः।

स्वरूपोत्प्रेक्षा-निरूपण के बाद अब जाति आदि पदार्थों की हेतुरूप में उत्प्रेक्षा का निरूपण किया जाता है।

उदाहर्तुमाह--

**यथा—**

जातिहेतूत्प्रेक्षा यथेति भावः।

जातिहेतूत्प्रेक्षा, जैसे—

उदाहरणमुपन्यस्यति—

**'त्वत्प्रतापमहादीपशिखाविपुलकज्जलैः।**
**नूनं नभस्तले नित्यं नीलिमा नूतनायते॥'**

राजानं प्रति कवेरुक्तिः—हे राजन्! त्वत्प्रताप एव महादीपस्तस्य शिखायाः, विपुलैः प्रभूतैः, कज्जलैः, नभस्तले आकाशे, नीलिमा नीलता, नूनं निश्चितम्, नित्यं प्रतिदिनम्, नूतनायते नूतन इव भवतीत्यर्थः।

उदाहरण का निर्देश किया जाता है—त्वत्प्रताप इत्यादि। कवि राजा से कहता है—हे राजन्! मानो, आपके प्रतापरूप महादीपक की शिखा ( लौ ) के विपुल काजलों से आकाश में 'नीलत्व' ( कालापन ) नित्य नया-सा होता रहता है।

उपपादयति—

अत्र नीलिमसामानाधिकरण्येनोत्प्रेक्षितस्य हेतुत्वेनोत्प्रेक्षणम्।

अत्रेति। 'त्वत्प्रताप' इत्यत्रेत्यर्थः। नीलिमसामानाधिकरण्येनेति। नैल्याधिकरणीभूताकाशगतत्वेनेत्यर्थः। उत्प्रेक्षितस्येति। कज्जलस्येति भावः। हेतुत्वेनेति। नूतनीभवन इति भावः।

उपपादन किया जाता है—अत्र इत्यादि। 'त्वत्प्रताप—' इस पद्य में 'नीलता' की उत्प्रेक्षा जिस अधिकरण ( आकाश ) में की गई है उसी अधिकरण—अर्थात् आकाश—में ही उत्प्रेक्षित 'काजलों' की हेतुरूप में उत्प्रेक्षा की गई है। तात्पर्य यह कि इस पद्य में दो उत्प्रेक्षाएँ हैं—एक 'नीलता' की, दूसरी 'काजलों' की। ये दोनों ही उत्प्रेक्षाएँ आकाश-रूप आधार में हुई हैं। इन दोनों उत्प्रेक्षाओं में 'नीलता' की उत्प्रेक्षा प्रधान है और 'काजलों' की उत्प्रेक्षा उसके हेतुरूप में की गई है। इसी अप्रधान उत्प्रेक्षा को लेकर यहाँ यह पद्य उदाहरण होता है। यह उदाहरण जाति-हेतूत्प्रेक्षा का है, क्योंकि 'कज्जल' जातिवाचक शब्द है।

पाठान्तरेऽस्यैव पद्यस्य हेतूत्प्रेक्षाप्रभेदान्तरोदाहरणता संभवतीत्याह—

'कज्जल-लेपनैः' इति कृते इयमेव क्रियाहेतूत्प्रेक्षा।

'विपुल-कज्जलैः' इत्यस्य स्थाने 'कज्जल-लेपनैः' इति पाठे विहिते लेपनस्य क्रियारूपतया क्रियाहेतूत्प्रेक्षोदाहरणतां प्रतिपद्यते पद्यमेतदिति भावः।

इसी पद्य में यदि 'विपुल-कज्जलैः' के स्थान में 'कज्जल-लेपनैः' पाठ कर दिया जाय तब यही पद्य क्रिया-हेतूत्प्रेक्षा का उदाहरण हो जायगा, क्योंकि 'लेपन' एक क्रिया है।

हेतूत्प्रेक्षाप्रभेदान्तरमुदाहर्तुमाह—

गुणहेतूत्प्रेक्षा यथा—

गुणहेतूत्प्रेक्षा, जैसे—

उदाहरणमुपन्यस्यति—

'परस्परासङ्गसुखान्नतभ्रुवः पयोधरौ पीनतरौ बभूवतुः।
तयोरमृष्यन्नयमुन्नतिं परामवैमि मध्यस्तनिमानमञ्चति॥'

नतभ्रुवः नम्रीभूतभ्रूलतिकाया नायिकायाः, पयोधरौ स्तनौ, परस्परासङ्गसुखात् मिथोमिलनानन्दात् हेतोः, पीनतरौ अतिस्थूलौ, बभूवतुः संजातौ, तथा, तयोः स्तनयोः, पराम् उत्कृष्टाम्, उन्नतिम् उत्कर्षम्, अमृष्यन् असहमानः, अयं मध्यः नायिकाकटिप्रदेशः, तनिमानम् कृशताम्, अञ्चति प्राप्नोति, इति, अवैमि जानामीत्यर्थः।

उदाहरण का निर्देश किया जाता है—परस्पर इत्यादि। नतभ्रू नायिका के दोनों स्तन, परस्पर आसक्त होने ( बढ़-बढ़ कर मिल जाने ) के सुख से अत्यन्त पीन ( पुष्ट ) हो गए हैं और उन दोनों की इस परम उन्नति को न सहता हुआ मध्यभाग ( कटि-प्रदेश ) कृशता को प्राप्त कर रहा है ऐसा मैं जानता हूँ, मानता हूँ।

उपपादयति—

अत्र पूर्वार्धे सुखस्य गुणस्य हेतुत्वं तावत् पञ्चम्यैव निर्दिष्टम्। अपरार्धे धर्मिविशेषणतया अनूद्यमानस्य गुणाभावस्य त्वार्थम्। यथा 'भोक्ता भुञ्जानो वा तृप्यति' इत्यादौ भोजनादेः।

अपरार्ध इति । उत्तरार्ध इत्यर्थः । आर्थत्वे हेतुगर्भं विशेषणमाह—धर्मीति । मध्ये-त्यर्थः । गुणाभावस्येति । मर्षणाभावस्येत्यर्थः । आर्थमिति । हेतुत्वमितिपूर्वोक्तस्यानुषङ्गोऽत्र बोध्यः । आर्थहेतुत्वप्रतीतिस्थलं दृष्टान्तविधयाऽह—यथा भोक्तेति । भोक्तेत्यत्र काल-सामान्यप्रतीतेर्विशेषोदाहरणमाह—भुञ्जानो वेति । 'परस्परा—' इत्यत्र पयोधरगते स्वाभाविके वयःकृते वा पीनतरत्वे परस्परासङ्गसुखस्य हेतुत्वमुत्प्रेक्ष्यते । सुखं च गुणः, अतो गुणहेतूत्प्रेक्षोदाहरणत्वमस्य पद्यस्य सिद्ध्यति । मध्यगते वयःकृते तनुत्वे स्तन-गतोन्नतिमर्षणाभावस्य हेतुत्वमुत्प्रेक्ष्यते इति गुणाभावहेतूत्प्रेक्षोदाहरणत्वमपि प्रकृतपद्यस्य । ननु मर्षणाभावो नात्र पृथग्हेतुतया निर्दिष्टोऽपि तु मध्यविशेषणतयेति कथं तस्य हेतुत्वेन प्रत्यय इति चेन्न, यथा 'भुञ्जानः तृप्यति' इत्यादौ शब्दतः कर्तृविशेषणतयोक्तस्यापि भोजनस्यार्थतस्तृप्तौ हेतुत्वं प्रतीयते तथैव प्रकृतेऽपि मर्षणाभावस्य तनुत्वे शाब्दहेतुत्वा-प्रतीतावपि आर्थं हेतुत्वं प्रतीयत इत्याशयादिति भावः ।

उपपादन किया जाता है—अत्र पूर्वार्धे इत्यादि । 'परस्पर—' इस पद्य में अवस्था-कृत स्तनों की पुष्टता के प्रति परस्परमिलनजन्यसुखरूप गुण की हेतुरूप से उत्प्रेक्षा की गई है । उक्त सुख का हेतु होना पञ्चमी विभक्ति ( सुखात्=सुख से ) द्वारा स्पष्ट कह दिया गया है । इसी अंश को लेकर यहाँ यह पद्य उदाहृत हुआ है । उत्तरार्ध में मध्य की कृशता के प्रति मर्षणाभाव ( स्तन की उन्नति को न सह सकने ) की हेतुरूप से उत्प्रेक्षा हुई है । यद्यपि मर्षणाभाव यहाँ पृथक् हेतुरूप में निर्दिष्ट नहीं है, किन्तु मध्यरूप धर्मी ( विशेष्य ) के विशेषणरूप में । ऐसी स्थिति में उसका हेतु होना शब्दतः अवगत नहीं होता तथापि जैसे 'खानेवाला अथवा खाता हुआ मनुष्य तृप्त होता है' इत्यादि वाक्यों में खाने आदि ( जो शब्दतः मनुष्य का विशेषण है ) का तृप्ति आदि हेतु होना अर्थतः प्राप्त हो जाता है उसी तरह यहाँ भी मर्षणाभाव का कृशता के प्रति हेतु होना भी अर्थतः सिद्ध होता है । फलतः इस अंश में गुणाभाव-मर्षणाभाव-( मर्षण मन का धर्म है अतः उसको भी कतिपय दार्शनिक गुण मानते हैं)—हेतूत्प्रेक्षा है ।

उत्प्रेक्षाप्रकरणे नैयायिकोक्तगुणानामेव गुणपदेन ग्रहणं न, अपि तु दार्शनिकान्तरा-भिमतगुणानामपीति स्फुटयितुमुदाहरणान्तरमाह—

यथा वा—

'व्यागुञ्जन्मधुकरपुञ्जमञ्जुगीतामाकर्ण्य स्तुतिमुदयत्त्रपातिरेकात् ।
आभूमीतलनतकन्धराणि मन्येऽरण्येऽस्मिन्नवनिरुहां कुटुम्बकानि ॥'

अस्मिन्, अरण्ये वने, व्यागुञ्जताम्, मधुकराणाम्, पुञ्जैः, मञ्जु मधुरं यथा स्यात्तथा, गीताम्, स्तुतिं स्वप्रशंसाम्, आकर्ण्य श्रुत्वा, उदयन्त्या आविर्भवन्त्याः, त्रपाया लज्जायाः, अतिरेकात् आधिक्यात्, अवनिरुहां तरुणाम्, कुटुम्बकानि समूहाः, आभू-मीतलं भूमितलमभिव्याप्य, नता नम्रीभूताः, कन्धराः शाखाः, येषाम्, तादृशानि, सम्पन्नानि सन्तीति मन्ये इत्यर्थः । अत्रापि स्वाभाविके तरुशाखानम्रीभावे लज्जागुणस्य हेतुत्वमुत्प्रे-क्षितमिति भावः ।

उत्प्रेक्षाप्रकरण में गुणपद से नैयायिकों द्वारा परिभाषित गुण ही नहीं लिये जाते, अपितु अन्य दार्शनिकों के अभिमत गुण भी गृहीत होते हैं इस बात को स्पष्ट करने के लिये दूसरा उदाहरण उपस्थित किया जाता है—यथा वा इत्यादि । इस वन में, गूँजते भ्रमरों के झुण्डों द्वारा मधुर-मधुर गाई गई अपनी स्तुति ( प्रशंसा ) सुनकर, मानो उत्पन्न हुई लज्जा की अधिकता के कारण, वृक्षसमूह अपनी गरदनें पृथिवी-तल तक झुकाए हुए हैं । यहाँ 'लज्जा' ( जो अन्य दार्शनिकों के मत से ही गुण है, नैयायिकों के मत से नहीं ) के हेतु होने की उत्प्रेक्षा है ।

की यहाँ सार्थकता है, क्योंकि वही 'आकाशगतमेघमालासमावृतत्व', उत्प्रेक्षमाण 'निर्लोचनवर्गसर्गत्व' के समानाधिकरण होने के कारण निमित्त होने योग्य 'सघन अन्धकारप्रयुक्त नेत्र से होनेवाले सब प्रकार के ज्ञान से रहित होना' रूप धर्म को उपस्थित करता है। तात्पर्य यह कि जगत् रूप विषय में की जानेवाली 'निर्लोचनवर्गसर्गत्व'-की उत्प्रेक्षा में जगत्गत 'सघन अन्धकारप्रयुक्त चाक्षुषज्ञानसामान्यशून्यत्व'रूप धर्म निमित्त होता है पर वह निमित्त धर्म उक्त नहीं है, उसकी उपस्थिति उक्त 'आकाशगत मेघमालासमावृतत्व' से होती है—अर्थात् 'आकाश मेघ-माला से आवृत है' ऐसा कहने पर आपसे आप घना अन्धकार और उस घने अन्धकार के कारण संसार का नेत्रद्वारक सभी ज्ञानों से वञ्चित होना सिद्ध हो जाता है, इस तरह से उक्त धर्म का प्रकृत उत्प्रेक्षा में उपयोग, साक्षात् न सही, पर परम्परया अवश्य होता है।

विषयगतं विशेषं स्फोरयति—

विषयोऽप्युपात्तो निरूपित एव। क्वचिदयमपह्नुतोऽपि भवति।

निमित्त-धर्मवत् उत्प्रेक्षाया विषयोऽपि शब्दोपात्तः पूर्वोदाहरणेषु ( 'तनयमैनाक—' इत्यत्रोत्प्रेक्ष्यस्य विषयिणो हिमगिरिभुजस्य भागीरथीरूपो विषयः, 'अम्भोजिनीबान्धव-' इत्यत्र शुक्लगुणस्य विषयिणः बकसमाजरूपो विषयः, एवमादिः ) निरूपित एव। अयं विषयः क्वचिदपह्नुतोऽपि भवतीति भावः।

विषयगत विशेष का स्पष्टीकरण किया जाता है—विषयोऽपि इत्यादि। निमित्तभूत धर्म के समान उत्प्रेक्षा का उपात्त विषय भी निरूपित हो चुका है—अर्थात् 'तनयमैनाक—' इस पद्य में 'भागीरथी'रूप, 'अम्भोजिनीबान्धव—' इस पद्य में 'बकसमाज'-रूप इसी तरह अन्यत्र अन्यरूप, उपात्त विषय दिखलाया जा चुका है। पर इससे यह नहीं समझना चाहिए कि विषय सर्वत्र उपात्त ही होता है। कहीं-कहीं वह अपह्नुत ( छिपा हुआ ) भी होता है।

अपह्नुतं विषयमुदाहर्तुमाह—

यथा—

जैसे—

उदाहरणमुपन्यस्यति—

'जगदन्तरममृतमयैरंशुभिरापूरयन्नयं नितराम्।
उदयति वदनव्याजात् किमु राजा हरिणशावनयनायाः॥'

इति रसगङ्गाधर उत्प्रेक्षाप्रकरणम्।

---

अमृतमयैः सुधामयैः, अंशुभिः किरणैः, जगदन्तरं जगन्मध्यम्, नितराम् अत्यन्तम्, आपूरयन्, हरिणशावनयनायाः मृगाक्ष्याः, वदनव्याजात् मुखच्छलात्, अयं दृश्यमानः, राजा चन्द्रः, उदयति उदेति किमु? इत्यर्थः। अत्र मुखरूपो विषयोऽपह्नुतः तदपह्नवश्चात्र—राजतादात्म्यसम्भावनादार्ढ्यायेति बोध्यम्।

चकास्ति लघुकायोऽपि कोविदामोदवर्धनः।
मिथिलास्वर्णदीशोभिसरोजश्रियमाश्रितः ॥ १ ॥
'नवानी'नामको ग्रामो गुणग्रामाभिमण्डितः।
मण्डले दरभङ्गाख्ये विख्यातबुधजन्मभूः ॥ २ ॥ ( युग्मकम् )

तस्मिन्मातृपुरे, पित्र्यं पुरं 'शतलखा'भिधम् ।
विहाय विद्यामध्यैष्ट विशिष्टां योऽतिमिष्टवाक् ॥ ३ ॥
समाप्याध्ययनं, यश्च संग्रामपुरवर्तिनि ।
विद्यालये विप्रपुत्रान् पञ्चवर्षाण्यपाठयत् ॥ ४ ॥
मुजफ्फरपुरे राजमहाविद्यालये तु यः ।
साहित्यविषयस्यास्ते प्रधानाध्यापकोऽधुना ॥ ५ ॥
रहस्यमतिसंक्षिप्तं रसगङ्गाधरस्य यः ।
प्रागुदात्तवचोभङ्गया प्राकाशयदुदारधीः ॥ ६ ॥
रसगङ्गाधरस्यैव प्रथमाननभागगाम् ।
हिन्दीव्याख्यां ततो यश्च विशदामुदपादयत् ॥ ७ ॥
'मदनमोहन'-नामसुधीरिमामरचयद्रुचिरां स च 'चन्द्रिकाम्' ।
बुधजनो यदि तां विनिभालयेत्, श्रम इहैष तदा सफलो भवेत् ॥ ८ ॥
यदि मनागपि सज्जनमानसे मृदुलतानलिनीनिलयेऽतुले ।
रुचिमुदञ्चयिता मम 'चन्द्रिका' किमधिकैरपि दुर्जनदूषणैः ॥ ९ ॥
जगन्नाथकृतस्येयं रसगङ्गाधरस्य या ।
चन्द्रिकाख्या महाभिख्या व्याख्या संख्यावतां मुदे ॥ १० ॥
प्रारब्धाऽब्धि-धरा-व्योम-नेत्र-संख्यासमन्विते ( २०१४ ) ।
वैक्रमेऽब्दे गता पूर्तिं कृष्णोत्पत्तितिथौ तु सा ॥ ११ ॥ ( युग्मकम् )

इति मैथिलब्राह्मणवंशावतंसेन विहारप्रान्तीयमुजफ्फरपुरस्थराजकीयधर्मसमाज-संस्कृतमहाविद्यालये साहित्यप्रधानाध्यापकपदमलङ्कुर्वता श्रीमदन-मोहनझा-शर्मणा कृतायां रसगङ्गाधर-चन्द्रिकायां द्वितीयाननादिरुत्प्रेक्षान्तो भागः समाप्तः ।

---

उदाहरण का निर्देश किया जाता है—जगदन्तर इत्यादि । अमृतमय अपनी किरणों से जगत् के मध्यभाग को अत्यन्त पूर्ण करता हुआ, यह क्या, मृगाक्षी के मुख के मिष से चन्द्र उदित हो रहा है? यहाँ मुखरूप विषय में अभेदसम्बन्ध से चन्द्रमा की उत्प्रेक्षा की जाती है । पर मुखरूप विषय यहाँ 'व्याज' पद कहकर छिपा लिया गया है और इस छिपाने का फल है 'मुख में चन्द्रमा के अभेद की संभावना का दृढ़ हो जाना' । अर्थात् इस तरह कहने से उत्प्रेक्षा और भी दृढ़ हो जाती है ।

इति दरभङ्गामण्डलान्तर्गत 'नवानी'ग्रामनिवासी, मैथिलब्राह्मणवंशावतंस, व्याकरण-न्याय-साहित्याचार्य, मुजफ्फरपुरस्थ राजकीयसंस्कृतमहाविद्यालयीय साहित्य-प्रधानाध्यापक श्री मदनमोहन झा रचित रसगङ्गाधर ( द्वितीय आननगत उत्प्रेक्षानिरूपणान्त भाग ) की 'चन्द्रिका' हिन्दी व्याख्या समाप्त हुई ।

---

समाप्तश्चाऽयं द्वितीयाननस्योत्प्रेक्षान्तो भागः

---

## टीकाकर्तुः परिचयः

मान्ये मिथिलादेशे सविशेषे सद्गुणैरखिलैः।
सीतासम्भवभूमौ सुरमुनिलोभास्पदे पूते ॥ १ ॥
'कोइलख'पदविदितो ग्रामो गुणि-गणाश्रयो जयति।
यत्रैकस्मिन् मञ्चे नृत्यन्तौ वाङ्-रमे दृष्टे ॥ २ ॥ (युग्मकम्)
तत्रासीदतिधीरो 'वियानाथो' विदां श्रेष्ठः।
मैथिलभूसुरभूषाभूतो भवसेवया पूतः ॥ ३ ॥
तत्तनयो 'मणि' नामा मणिरिव किरणोज्ज्वलो जातः।
'सीमा' नाम्नि ग्रामे स्ववासमसौ कल्पयामास ॥ ४ ॥
तत्रासौ शुभशीलो निजविशुद्धबुद्धिबलमूलम्।
धेनु-धरा-धान्य-धनं सघनयशःशोभितं लेभे ॥ ५ ॥
कम्रौ कूपतडागौ लसतस्तत्र खानितौ तेन।
अद्यापि तस्य कीर्तिं कथयन्तौ लोलकल्लोलैः ॥ ६ ॥
भ्राता तस्य कनीयानतुलबलः कोऽपि मल्लोऽभूत्।
तडागेऽद्य यदानीतपृथुलशिला शोभते धृष्टा ॥ ७ ॥
मणिरुपलेभे ललितं 'ललितलाल'नामकं तनयम्।
विनयविभूषितहृदयं सदयं सकलशक्तियोगेऽपि ॥ ८ ॥
तस्य द्वौ समभूताम् पुत्रौ जनलोचनानन्दौ।
'सिंहेश्वर'-'कपिलेश्वर'नामानौ परिणते वयसि ॥ ९ ॥
अथ दैवाद्दरभङ्गा राजकर्मचारिभिः प्रबलैः।
समुपद्रुतं स्वकीयं ग्रामं तौ तूर्णमत्यजताम् ॥ १० ॥
नेदीयस्यतिरम्ये श्वशुरपुरे 'शतलखा'संज्ञे।
बत, 'सिंहेश्वरशर्मा' कृतवसतिर्जीवनं निन्ये ॥ ११ ॥
'कपिलेश्वर'स्तदानीं बालो 'नरहा' पुरे मातुः।
विहिताश्रयोऽधुनावधि जीवति बहुभिः सुतैः साकम् ॥ १२ ॥
पुत्रास्त्रयो विनीताः 'सिंहेश्वर' शर्मणो जाताः।
त्यक्त्वा याननतिबाल्ये पिता पुरन्दरपुरीं प्रास्थात् ॥ १३ ॥
पूज्यो 'युगलकिशोरो' मम तु पिता मध्यमस्तेषाम्।
कृतकृत्योऽसौ सम्प्रति जीवति देवार्चने लीनः ॥ १४ ॥

अहमानत्य 'नवानी' वसतौ मातुः कृतावासः ।
निजजीवनं निनीषे 'चक्रमचिन्त्यं हि दैवस्य' ॥ १५ ॥
'व्रजमोहनोग्रमोहननामानौ भ्रातरौ धीरौ ।
विद्या-विनय-समेतौ प्राणसमौ मे प्रियौ भवतः ॥ १६ ॥
'कामेश्वरी' प्रिया मे सत्कुल-शीलान्विता पत्नी ।
कुटिलां जीवनयात्रां सरलामेवाधुना कुरुते ॥ १७ ॥
'आनन्दः' खलु प्रथमो 'धीरेन्द्र'श्च द्वितीयो मे ।
पुत्रौ विनयसमेतौ विलसति विद्यार्जने लीनः ॥ १८ ॥
कन्ये द्वे कमनीये 'गङ्गा-सरिता'-भिधे गेहम् ।
मुखरयतो मधुकल्पैर्बाल्योचितवचनविन्यासैः ॥ १९ ॥
श्रीमान् 'यदुपतिमिश्रो' गुरुस्तमिस्राकुले नयने ।
प्रोन्मीलयन् मदीये बहुविधबोधाञ्जनैः पूर्वम् ॥ २० ॥
बुधगणवन्दितचरणः शरणागतवत्सलो जयति ।
श्रीमा'नीश्वरनाथो' यो मयि शुभवैदुषीं व्यतनोत् ॥ २१ ॥
व्याकृतिकलाप्रवीणं सालङ्कृतिकाव्यमर्मज्ञम् ।
तत्पादाम्बुजसेवा मामकरोदल्पकालेन ॥ २२ ॥
प्रातःस्मृतिविषयोऽसौ 'श्रीजगदीशो'ऽतिशिवभक्तः ।
निपुणं नव्यन्याये कृत्वा मामुन्नतं चक्रे ॥ २३ ॥
श्रेष्ठः 'षष्ठीनाथः' श्रोत्रियवंशावतंसो मे ।
वेदान्तज्ञानगुरुः काश्यां परलोकपथिकोऽभूत् ॥ २४ ॥

मम परिचयमेनं स्पष्टसंक्षिप्तरूपं
गुणमयमगुणं वा नूतनं कौतुकेन ।
रुचिररसविचारग्रन्थपाठप्रसङ्गे
परकृतिषु प्रतीताः साधवो भावयन्तु ॥ २५ ॥



## प्रथमाननस्योदाहृतश्लोकानुक्रमणिका





# द्वितीयाननोत्प्रेक्षान्तभागस्योदाहृतश्लोकानुक्रमणिका

468





—ooOoo—


प्राप्तिस्थानम्—

**चौखम्बा विद्या भवन,**

**चौक, वाराणसी–१**

